# NEMINIRVANA

OF

# VÂGBHATA.

EDITED BY

PAṆḌITA S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,
Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

काव्यमाला. ५६.

महाकविश्रीमद्वाग्भटविरचितं

# नेमिनिर्वाणम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरवोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९६



मूल्यं १० आणकाः ।

# काव्यमाला ।

## महाकविश्रीमद्वाग्भटविरचितं

# नेमिनिर्वाणम् ।

### प्रथमः सर्गः ।

श्रीनाभिसूनोः पदपद्मयुग्मनखाः सुखानि प्रथयन्तु ते वः ।
सैमं नमन्नाकिशिरःकिरीटसंघट्टविस्रस्तमणीयितं यैः ॥ १ ॥
निःशेषविद्येश्वरमाश्रयामि तं वुद्धिहेतोरजितं जिनेन्द्रम् ।
अवादि सर्वानुपघातवृत्त्या येनागमः संगमितस्थितार्थः ॥ २ ॥
आदित्यचक्रेण कृतैककालप्रदक्षिणप्रक्रमणेन भक्त्या ।
लुप्तेव नालोक्यत यस्य कायच्छाया स वः पातु जिनस्तृतीयः ॥ ३ ॥
श्रेयांसि दिश्यादभिनन्दनो वः स सर्वदा यस्य दृढव्रतस्य ।
व्यर्थीभवन्ती हृदि पुष्पवाणवाणावलिर्मुक्तिवरस्रगासीत् ॥ ४ ॥
अपारसंसारसमुद्रनावं देयाद्दयालुः सुमतिर्मतिं नः ।
नित्यप्रियायोगकृते यदन्ते तपस्यतीवाविरतं रथाङ्गः ॥ ५ ॥
पद्मासनस्थः स्फुटपद्मनेत्रः पद्मारुणश्रीर्धृतपद्मलक्ष्मा ।
पद्मप्रभो नः प्रभवेऽस्तु नित्यं पद्माप्रदानोद्यतपाणिपद्मः ॥ ६ ॥

---

१. अयं च श्रीमान्वाग्भटमहाकविः कदा कतमन्महीमण्डलं मण्डयामास—इति गवे-षणायां वाग्भटालंकारे आदियमकाद्युदाहरणेषु 'कान्तारभूमौ–' (६।४६) इत्या-[illegible]कृतकाव्यस्थपद्यानां संगृहीतत्वेन वाग्भटालंकारकर्तृवाग्भटतोऽस्य वाग्भटस्य प्रा-[illegible]नवयं वा कल्पनीयम्. आद्ये जन्मभूमिसमयानिश्चयः, अन्त्ये वाग्भटालंकार-[illegible]कातो निर्णयः. २. सममेककालम्.

स्वस्ति क्रियात्स्वस्तिकलाञ्छनो नः स्तम्भायमानोरुभुजः सुपार्श्वः ।
विडम्बयामास विलासवेश्मश्रियं सदा यः करुणातरुण्याः ॥ ७ ॥

चन्द्रप्रभाय प्रभवे त्रिसंध्यं तस्मै नमो विस्मयनीयभासे ।
यत्पादपद्मौ सविधस्थितेऽपि चन्द्रे विनिद्राद्भुतकान्तियुक्तौ ॥ ८ ॥

भूरिप्रभानिर्जितपु[1]ष्पदन्तः करायतिन्यक्कृतपु[2]ष्पदन्तः ।
त्रिकालसेवागतपुष्पदन्तः श्रेयांसि नो यच्छतु पुष्पदन्तः ॥ ९ ॥

मूर्ध्ना मुहुश्चुम्बितभूतलेन तं शी[3]तलं देवमहं नमामि ।
यस्मिन्मनोवर्तिनि सर्वतोऽसौ निवर्तते दुर्गतिदुःखतापः ॥ १० ॥

सुवर्णवर्णद्युतिरस्तु भूत्यै श्रेयान्विभुर्वो वि[4]नताप्रसूतः ।
उच्चैस्तरां यः सुगतिं ददानो विष्णोः सदानन्दयति स्म चेतः ॥ ११ ॥

श्रीवासुपूज्यः स जपारुणो वः श्रेयः क्रियाद्द्वादशतीर्थनाथः ।
सद्वृत्तमुक्तावलिमध्यवर्ती यः पद्मरागश्रियमादधाति ॥ १२ ॥

वन्दामहे पादसरोजयुग्ममन्तः कृपालोर्वि[5]मलस्य तस्य ।
यश्चापषष्ट्या कलिताङ्गयष्टिस्तथापि पार्श्वस्थितकोलराजः ॥ १३ ॥

ज्योतिर्गणैः संततसेव्यमान[6]मनन्तमाकाशमिव स्तवीमि ।
सूर्यायते यत्र विभावितानं निशाकरत्याननमण्डलं च ॥ १४ ॥

तं धर्मनामानमहं महेशं भक्त्या भवच्छेदकरं स्मरामि ।
यः सुव्रताभानुसुतत्वमुच्चैर्व्रतप्रभाभ्यां वदतीव देवः ॥ १५ ॥

शान्तिं स वः शान्तिजिनः करोतु विभ्राजमानो मृगलाञ्छनेन ।
शशीव विश्वप्रमदैकहेतुर्यः पा[7]पचक्रव्यथको बभूव ॥ १६ ॥

देव्याः श्रियो यस्तनयः प्रसिद्धः श्रीकुन्थुरत्यद्भुतरूपमूर्तिः ।
विगाहमानोऽपि मनांसि नासीत्कस्यापि तापाय स वः पुनातु ॥ १७ ॥

---

१. 'पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ' इति हैमः. २. 'पुष्पदन्तस्तु दिङ्नागे जिनभेदे गणान्तरे' इति हैमः. ३. 'शीतलः शिशिरेऽर्हति' इति हैमः. ४. 'श्रेयसस्तीर्थंकरस्य माता विनता' इति टिप्पणी. ५. 'विमलोऽर्हति निर्मले' इति हैमः. ६. 'अनन्तस्तीर्थकृद्विष्णौ । विष्णौ शेषे' इति हैमः. ७. पापसमूहस्य, पापिचक्रवाकानां वा.

अराय तस्मै विजितस्मराय नित्यं नमः कर्मविमुक्तिहेतोः ।
यः श्रीसुमित्रातनयोऽपि भूत्वा रामानुरक्तो न बभूव चित्रम् ॥ १८ ॥
तपःकुठारक्षतकर्मवल्लिर्मल्लिर्जिनो वः श्रियमातनोतु ।
कुरोः सुतस्यापि न यस्य जातं दुःशासनत्वं भुवनेश्वरस्य ॥ १९ ॥
व्रते मतिं श्रीमुनिसुव्रताख्यस्त्रिकालविद्वो विदधातु तुष्टः ।
अन्तर्निरुध्यात्र पयःप्रचारं येनात्मदुर्गादरिचक्रमस्तम् ॥ २० ॥
नमामि भक्त्या नमिनामधेयं सर्वज्ञमज्ञानतमोनिवृत्त्यै ।
खिन्नो भवाध्वभ्रमणेन नूनं यो योगनिद्रामभजज्जिनेन्द्रः ॥ २१ ॥
श्रीनेमिनाथस्य जयन्ति कान्तास्ताः कान्तयो यामुनवीचिकल्पाः ।
धर्मोपदेशे दशनप्रभाभिः फेनायितं यत्र विसारिणीभिः ॥ २२ ॥
श्रीपार्श्वनाथः स जयत्यजस्रं यस्मिन्ननेकान्तविधायिहेतौ ।
स्वनिग्रहव्यग्रतया स्थितानामेकान्तमन्तर्न सुखं परेषाम् ॥ २३ ॥
श्रीवीरनाथाय नमः प्रकाममनन्तवीर्यातिशयाय तस्मै ।
अन्तःस्थमेकाङ्गपरिग्रहो यः कामादिचक्रं युगपज्जिगाय ॥ २४ ॥
सा भारती वो विभवाय भूयाद्यद्वल्लकीगीतरसेन लक्ष्मीः ।
कराग्रपूते कमले वसन्ती सहानवस्थाव्रतभङ्गमागात् ॥ २५ ॥
एकः प्रकृत्या जगतोऽनुकूलः प्रकाशमन्यः प्रतिकूल एव ।
अतः सतोऽनाप्यसतोऽनुवृत्तौ विशेषशाली भवति प्रयत्नः ॥ २६ ॥
गुणप्रतीतिः सुजनाज्जनस्य दोषेष्ववज्ञा खलजल्पितेषु ।
अतो ध्रुवं नेह मम प्रबन्धे प्रभूतदोषेऽप्ययशोवकाशः ॥ २७ ॥
रम्याः सुराष्ट्राभिधया प्रसिद्धा दिवो निवेशा इव सन्ति देशाः ।
तिलोत्तमा यत्र कृषिः सुकेशी स्त्री मञ्जुघोषा च किल प्रकृत्या ॥२८॥
गोमण्डलैर्दिङ्मुखविप्रकीर्णैर्नीहारहारप्रतिमैः समन्तात् ।
देशान्तराणां विभवेन दृप्ता येऽवज्ञया हासमिवोद्वहन्ति ॥ २९ ॥
वपुर्वनाली हरितोत्तरीयमुल्लासिसत्पत्रलतं वहन्त्याः ।
यत्रावनेर्विभ्रमदर्पणत्वं सरांसि बिभ्रत्यमलोदकानि ॥ ३० ॥

---

१. सुमित्रा दशरथपत्नी, अरतीर्थकरमाता च. २. रामो दाशरथिः, रामा अबलाः.

चक्षुः पराभूतमिवात्तखेदं संभूय संप्राप्तमुपद्रवाय ।
निरुन्धते गीतगुणेन गोप्यः क्षेत्रेषु यत्रानिशमेणयूथम् ॥ ३१ ॥
यत्रार्जुनीभिस्तुहिनार्जुनाभिरध्यासिताः शाद्वलभूमिभागाः ।
घना नभस्तः पतिताः कथंचित्समं बलाकाभिरिवावभान्ति ॥ ३२ ॥
विराजमानामृषभाभिरामैर्ग्रामैर्गरीयो गुणसंनिवेशाम् ।
सरस्वतीसंनिधिभाजमुर्वीं ये सर्वतो घोषवतीं वहन्ति ॥ ३३ ॥

देशवर्णनम् ।

तत्र प्रसिद्धास्ति विचित्रहर्म्या रम्या पुरी द्वारवतीति नाम्ना ।
पर्यन्तविस्तारिविशालशालच्छायाछविर्यत्परिखापयोधिः ॥ ३४ ॥
विलोलकल्लोलकरप्रहारैर्वावारणैर्घातनिपातिदन्तैः ।
यद्वप्रमुच्छेत्तुमजातशक्तिः फेनैर्विलक्षो हसतीव सिन्धुः ॥ ३५ ॥
राधाव्यधाभ्यासपरेण यस्यामासाद्य तत्कार्मुककर्म दाक्ष्यम् ।
मनोभुवा विश्वमनांसि मन्ये नीतानि लोलान्यपि लक्षभावम् ॥ ३६ ॥
परिस्फुरन्मण्डलपुण्डरीकच्छायापनीतातपसंप्रयोगैः ।
या राजहंसैरुपसेव्यमाना राजीविनीवाम्बुनिधौ रराज ॥ ३७ ॥
एवंविधां तां निजराजधानीं निर्मापयामीति कुतूहलेन ।
छायाछलादच्छजले पयोधौ प्रचेतसा या लिखितेव रेजे ॥ ३८ ॥
चक्रायमाणैर्मणिकर्णपूरैः पाशप्रकाशैरतिहारहारैः ।
भ्रूभिश्च चापाकृतिभिर्विरेजुः कामास्त्रशाला इव यत्र बालाः ॥ ३९ ॥
यत्राङ्गनागानवितीर्णकर्णैरनारतं केलिकुरंगयुग्मैः ।
न स्वैरकान्तारविहारहेलावियोगदुःखानि विभावितानि ॥ ४० ॥
प्राचीं परित्यज्य नवानुरागामुपेयिवानिन्दुरुदारकान्तिः ।
उच्चैस्तनीं रत्ननिवासभूमिं कान्तां समाश्लिष्यति यत्र नक्तम् ॥ ४१ ॥
प्रकोपकम्पाधरबन्धुराभ्यो भयं वधूभ्यस्तरुणेषु यस्याम् ।
कर्पूरकालेयकसौरभाणां प्रभञ्जनः पौरगृहेषु चौरः ॥ ४२ ॥
उत्तुङ्गशृङ्गोत्करकेशरिभ्यो मागाद्भयं नक्तमयं मृगो मे ।
इतीव यत्र स्फटिकाश्मशालाकैर्मृगाङ्कः स्थगयांबभूव ॥ ४३ ॥

विलोकयन्यत्र कुतूहलेन लीलावतीनां मुखपङ्कजानि ।
जज्ञे स्मरः सेर्ष्यरतिप्रयुक्तकर्णोत्पलाघातसुखं चिरेण ॥ ४४ ॥
सुगन्धिनः संनिहिता मुखस्य स्मितद्युता विच्छुरिता वधूनाम् ।
भृङ्गा बभुर्यत्र भृशं प्रसूनसंक्रान्तरेणूत्करकर्बुरा वा ॥ ४५ ॥
उदन्वतो नित्यविलोलवीचीकरोपदिष्टाभिनयक्रियेव ।
प्रासादचूलानि हितैश्चलद्भिर्ननर्त या केतुभुजैरजस्रम् ॥ ४६ ॥
यद्वप्रभित्तिः शरदभ्रशुभ्रा भूयश्चकाशे जलधेः सकाशे ।
समुच्छलद्भिर्विपुलैस्तरङ्गैरुन्मीलितेव स्फुटफेनराजिः ॥ ४७ ॥
मूर्त्यन्तरेण प्रतिबिम्बनाम्ना रत्नाकरं या स्वयमाविवेश ।
भास्वन्ति भूयांसि च तादृशानि रत्नानि नो चेत्कथमन्यथास्याम् ॥४८॥
रेजे दलच्चम्पकचारुभासां यत्राङ्गनानां तनुरोमराजिः ।
शलाकयोन्मीलयतो विधातुर्मुखाच्च्युतेवाञ्जनवारिरेखा ॥ ४९ ॥
आबद्धनानामणितान्क्वणद्भिर्विहंगमैः सक्ततरङ्गबाहून् ।
शिरोगृहाद्यत्र नदीनदीनसङ्गानपश्यन्मिथुनानि हर्षात् ॥ ५० ॥
दुष्कर्मनिर्माणनियोगदक्षं मृगेक्षणानां च नृणां च नक्तम् ।
निर्वासयामास निवासरत्नप्रभोद्गमैर्या बहिरन्धकारम् ॥ ५१ ॥
[1]सुभ्रूयुगं चञ्चलनेत्रवाहं यस्यां स्फुरत्कुण्डलचारुचक्रम् ।
आरुह्य जातस्त्रिजगद्विजेता वधूमुखस्यन्दनमङ्गजन्मा ॥ ५२ ॥
गतो मनोभूरपि मानपात्रं यत्राङ्गनानां मदनो बबाधे ।
भवन्ति यद्वा मधुबद्धरागाः कृतोपकारेऽपि विकारवन्तः ॥ ५३ ॥
घनभ्रमं मूर्धजधूपधूमस्तोमेषु यस्यां गृहबर्हिणानाम् ।
अम्भश्च्युतश्चन्द्रकरैर्निशायां चन्द्राश्ममय्यः सुषुवुः प्रणाल्यः ॥ ५४ ॥
यत्रेन्दुपादैः सुरमन्दिरेषु लसेषु शुद्धस्फटिकेषु नक्तम् ।
चक्रे स्फुटं हाटककुम्भकोटिर्नभस्तलाम्भोरुहकोशशङ्काम् ॥ ५५ ॥

---

१. शोभनं भ्रूयुगं यत्र, शोभने भ्रुवौ युगं यत्र । चञ्चले नेत्रे वहतीति, चञ्चलनेत्रे एव वाहावश्वौ यत्र । स्फुरतोः कुण्डलयोश्चारु चक्रं यत्र, स्फुरन्ती कुण्डले एव चारुणी चक्रे यत्र.

निशासु शय्यापरिवर्तलुप्ता कपोलपाली मृगनाभिशोभा ।
अलुप्तवत्कुण्डलनीलरत्नप्रभाभिराभासत यद्वधूनाम् ॥ ५६ ॥

यमैकवृत्तेर्घनवाहनस्य प्रचेतसो यत्र धनेश्वरस्य ।
व्याजेन जाने जयिनो जनस्य वास्तव्यतां नित्यमगुर्दिगीशाः ॥ ५७ ॥

भविष्यतस्तीर्थकरस्य नेमेर्निमित्तमत्यन्तमनोहरश्रीः ।
कृतिः सुराणां ससुरेश्वराणां या प्राप सौरीति ततः प्रसिद्धिम् ॥५८॥

सद्रत्नरत्नाकरचारुकाञ्चीं महीमिवान्यां यदुवंशवन्द्यः ।
अपालयत्तां विजयाभिधानं नृपः समुद्रोपपदं दधानः ॥ ५९ ॥

झलज्झलद्दिग्गजकर्णकीर्णैर्वातैरिवाशासु सदा प्रदीप्तः ।
यस्यारिभूभृद्घनवंशदाहे प्रतापवह्निः पटुतां बभार ॥ ६० ॥

यैदर्धचन्द्रापचितोत्तमाङ्गैरुद्दण्डदोस्ताण्डवमादधानैः ।
विद्वेषिभिर्दत्तशिवाप्रमोदैः कैः कैर्न दध्रे युधि रुद्रभावः ॥ ६१ ॥

यस्मिन्भुवो भर्तरि सत्यसंधे त्रयी गतिर्भूमिभृतां बभूव ।
तत्पादसेवा मरणं रणे वा क्वचिन्निवासो विपुले वने वा ॥ ६२ ॥

द्वे कौतुके हन्त यदातपत्रच्छायातलस्थायिनि भूतलेऽस्मिन् ।
संतापमापद्यदसाधुवर्गो यद्दृष्टिरप्यस्खलिता बभूव ॥ ६३ ॥

हालापदूरीकृतकोपलज्जाः सन्नाभिमानास्तनवप्रभावाः ।
मन्त्रप्रयोगादबलाः सहेलं येनाक्रियन्त प्रतिपक्षभूपाः ॥ ६४ ॥

यस्मिञ्जगज्जेतरि याचकेभ्यो ग्रामाननन्तान्वितरत्यजस्रम् ।
स्पर्धानुबन्धादिव भूरिदेशत्यागं वितेने यदरातिवर्गः ॥ ६५ ॥

---

१. अहिंसादियमपरस्य, यम इत्येका मुख्या वृत्तिः शक्तिर्यत्र । प्रभूतयानस्य, मेघवाहनस्येन्द्रस्य । प्रकृष्टचित्तस्य, वरुणस्य । धनेश्वरस्य, कुबेरस्य. २. समुद्रविजयाभिधानम्. ३. बाणकर्तितम्, चन्द्रभूषितं वा । शिवा शृगाली, पार्वती वा । रौद्ररूपम्, शिवत्वं च. ४. 'हा' इत्यालापेन दूरीकृते कोपलज्जे यैस्ते, हालया मद्येनापदूरीकृते कोपलज्जे याभिस्ताः । सन्नोऽभिमानो येषां ते अत एवास्तो नवो प्रभावो येषां ते, सुन्दरनाभिमानिनास्तो नवानां यूनां प्रभावो धैर्यरूपो याभिस्ताः । यद्वा—सन्नोऽभिमान ... समन्तात्स्तनोच्चत्वं यासां ताः । यद्वा—सुन्दरो नाभिमानो यासां ताः, स्तनयोर्नवप्रभ... उच्चता यासु ताः.

न व्यञ्जनत्वे परवर्णयुक्तिरासीन्न वाञ्छत्वमतः प्रतीमः ।
यद्वैरिनारीनयनारविन्देष्वसंधिकार्यं प्रकटीबभूव ॥ ६६ ॥

श्रोतुं यशः कान्तमशक्नुवन्तस्तद्वैरिणो ये युधि मृत्युमीयुः ।
तैः कष्टमश्रावि वधः स्व एव दिव्याङ्गनाभिर्दिवि गीयमानः ॥ ६७ ॥

शून्ये यदीयारिपुरे पुरारेर्धाम्नः पुरोवाहमवेत्य सत्यम् ।
उत्कर्णिताः संभृतहुंकृताश्च जिह्वाञ्चलैरुल्लिलिहुश्चमर्यः ॥ ६८ ॥

आहारदानान्यखिलानि यच्छन्नजायताक्षीरकृतार्थितार्थी ।
यो दानवत्वे सुरलोकभक्तः को बुध्यते राजगतिं विचित्राम् ॥ ६९ ॥

उरःप्रहारत्रुटितोरुहारमुक्ताफलैर्वैरिविलासिनीनाम् ।
पेते क्षितौ यन्नवकीर्तिवल्ली बीजैरिवाश्रुप्लवपङ्किलायाम् ॥ ७० ॥

वसुंधरां धारयतः स्वधर्मे यस्योरुदोश्चण्डिममण्डनस्य ।
कलौ कदाचिन्न किलाभिमुख्यं भेजे दुराचार इवारिवर्गः ॥ ७१ ॥

न केवलं यत्पदपीठसङ्गादानम्रचूडामणयो नृपाणाम् ।
भूरी बभारानतभूमिगोलदोलापि तैर्व्यालपतेश्च धृष्टाः ॥ ७२ ॥

अथात्मजं श्रीवसुदेवनाम्नः स्वभ्रातुरत्यद्भुतभक्तिभाजः ।
निवेशयामास स यौवराज्ये गोविन्दमानन्दितदेववृन्दम् ॥ ७३ ॥

समुच्छलत्कज्जलकोमलश्रीस्तत्कालजन्मा यमुनाप्रवाहम् ।
चिच्छेद यो दीप इव प्रभावांस्तमःसमूहं सुदशोपगूढः ॥ ७४ ॥

कथं यथावन्ननु चक्रपाणेर्निरुच्यते तस्य चरित्रमत्र ।
वधोद्यतायाः किल पूतनाया यः पीतरक्तोऽपि बभूव कालः ॥ ७५ ॥

प्रकोपतः कण्टकितप्रकीर्णरत्नप्रभाकेशरभासुरास्यम् ।
यः केलिनीलोत्पलवत्कलिन्दकन्याह्रदात्कालियमाचकर्ष ॥ ७६ ॥

विध्वस्तबन्धं त्रुटिताङ्गसंधि दलद्विशालाक्षमुदस्तपादम् ।
यथा शिशुत्वे शकटं तथा यश्चाणूरमल्लं दलयांचकार ॥ ७७ ॥

---

१. 'न क्षीरेण पायसेन' इति विरोधः, 'अक्ष्णः प्रेरणेन' इति परिहारः. २. दानित्वे, दनुजत्वे. ३. वर्णपरत्वेन विरोधः, अन्यार्थत्वेन परिहारः.

रम्यां जनानन्दकरीं दधानः श्रियं सदा सौरभसं प्रपन्नः ।
उन्मूलयन्यस्तरुयुग्ममुच्चैर्महाचलत्वं जगति प्रपेदे ॥ ७८ ॥
गोवर्धनोर्वीभृति येन दोर्भ्यामभ्युद्धृते भूतलमापतन्त्यः ।
आरोहणार्थं स्फटिकावनद्धसोपानशोभां सरितो वितेनुः ॥ ७९ ॥
रक्तेन लिप्तः करवज्रपातवान्तेन यः केशिकिशोरकस्य ।
दावाग्निधूमः स मया महीध्रज्वालाभिराश्लिष्ट इवावभासे ॥ ८० ॥
यशोदयानन्दसमीहयालं प्रवर्धितात्मा विदधद्विभूतिम् ।
रणे च दाने च विशालशक्तिर्निष्कं सतां यः प्रथयांचकार ॥ ८१ ॥

तेनाथ निर्मथितदानवनाथधाम्ना
श्रीमांल्लघूकृतमहीतलभूरिभारः ।
राजा समुद्रविजयः सुतलाभहेतोः
किं तन्न यद्व्रतमसौ चिरमाचचार ॥ ८२ ॥

द्विरदकरजलार्द्रद्वारमाचारनम्र-
क्षितिपलुलितहारस्वस्तिकैः स्वस्तियुक्तम् ।
तरलतनयशून्यप्राङ्गणं वीक्षमाणो
भवनमवनिनाथः काननं सोऽथ मेने ॥ ८३ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये पुत्रचिन्ताभिधानो नाम
प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

अथैकदा सदसि दिगन्तरागतैरुपासितः क्षितिपतिभिर्महीपतिः ।
नभस्तलादवनितलानुसारिणीः सुराङ्गनाः स किल ददर्श विस्मितः ॥ १ ॥
निरम्बुदे नभसि नु विद्युतः क्वचिन्नु तारकाः प्रकटितकान्तयो दिवा ।
सविस्मयैरिति नितरां जनैर्मुहुर्विलोकिताः पथि पथि बद्धमण्डलैः ॥ २ ॥
वितन्वतीर्वियति विराजिभिर्मुखैर्विभावरीविभुनिकुरुम्बडम्बरम् ।
विवृण्वतीरिव मणिकिङ्किणीरवं सरद्द्विपं सहचरमात्मनः स्फुटम् ॥ ३ ॥

सुरद्रुमप्रसवसमूहशेखराण्युपर्युपर्यलिवलयैर्विसर्पिभिः ।
परिस्फुरन्मरकतरत्ननिर्मितैर्विराजिता इव नवघर्मवारणैः ॥ ४ ॥
समन्मथं प्रथितभुजावलम्बनैर्दिनेश्वरैः स्वयमिव रत्नकङ्कणैः ।
मुखप्रभापटलजलभ्रमायितैः कृतश्रियः कनकमयैश्च कुण्डलैः ॥ ५ ॥
कुचस्थलीनिविडनितम्बमण्डलीभरादिव त्वरितमधश्चरिष्णवः ।
विभूतिभिर्विरचितविस्मयां [तदा] क्षणेन ताः क्षितिपसभामवातरन् ॥ ६ ॥
उपेत्य च क्षितिपसमीपमुज्ज्वलद्विजप्रभापटपिहितक्षताधरा ।
समुद्यतैः कियदपि दक्षिणैः करैर्जयेति ताः सममुदचीचरन्वचः ॥ ७ ॥
महीपतेरनुपमरूपसंपदा सविस्मया इव विनिमेषलोचनाः ।
सिषेविरे सरभसकिंकरार्पितान्यनुक्रमं कनकमयासनानि ताः ॥ ८ ॥
अथोच्चकैरमरमहीध्रकन्दरां निनादयन्हरिरिव रत्नसंसदम् ।
गभीरया गुरुरवनिर्भृतां गिरा नभश्चरीनिकरमसावभाषत ॥ ९ ॥
समीहया सह भवदिष्टसंपदां पुरंदरादभयमुपेयुषां सदा ।
नभःसदां न खलु नृपैः प्रयोजनं प्रतन्यते किमपि कदापि यद्यपि ॥ १० ॥
विधीयतां किमिति तथापि जल्पते भवादृशे सदनमुपागते जने ।
प्रयोजनं स्वमिदमहो यदर्थ्यते निदेशनाधिगमनिमित्तमुत्तमः ॥ ११ ॥
नरेश्वरे गिरमिति गर्जिगौरवामुदीरयत्युदयपरम्परास्पदे ।
गरीयसी युवतिषु तासु जल्पितुं प्रचक्रमे कमलनिकेतवासिनी ॥ १२ ॥
न युज्यते नरवर वक्तुमीदृशं वचस्तव त्रिदशकलाशरीरिणः ।
महीपतिर्दशमुखदारणाद्दिवो भयज्वरं किमु न जहार राघवः ॥ १३ ॥
दिवस्पतेर्विजययशःपताकिकां किलोर्वशीमसुरवरेण केशिना ।
हृतां जवादपहृतदैत्यजीवितः पुरूरवाः किमु न समानयन्नृपः ॥ १४ ॥
बिभर्ति यः शिखरनिवेशसुस्थितां नभःसदां पदममरावतीं पुरीम् ।
सुराचलं कलयति तं वसुंधरा धृता सती नरपतिबाहुविक्रमैः ॥ १५ ॥
वसुंधराधिपतिममर्त्यजातितो विलक्षणं न खलु पुराविदो विदुः ।
अमानवैः कलिततनुः पराक्रमैर्विभिद्यते नरवपुषा स केवलम् ॥ १६ ॥

तमश्चये महति निमज्जतः सतो जनस्य सत्पथपरिदर्शनं दिशन् ।
दिगन्तरप्रथितरथाश्वसंचरः प्रभाकरो भवति नरेश्वरः स्फुटम् ॥ १७ ॥
दधद्धनुर्घनरवराजितं कृती कृतार्थयञ्जनमिह कामवृष्टिभिः ।
परिक्षतक्षितिधरपक्षसंततिः पुरंदरात्किमपि न हीयते नृपः ॥ १८ ॥
यदाज्ञया स्खलितमिदं न लङ्घते निजं निजं जगदवधिं कदाचन ।
तयोः समप्रकटितदण्डचण्डयोः किमन्तरं नरपतिधर्मराजयोः ॥ १९ ॥
निरागसाममृतसमानसंगमः कृतैनसां प्रकटितदाहडम्बरः ।
हुताशनः क्षणमधिवासितो यथा तथा नृपः सहजगुणेन वर्तते ॥ २० ॥
चतुर्दिगस्खलितजवप्रचारिणं विना न यं प्रभवति जीवितुं जगत् ।
स भूपतिः कृतशुचिमित्रसंगतिर्महाबलः कथय कथं न कथ्यते ॥ २१ ॥
वनीपकानभिलषितेन योजयन्ननेकधा विरचितकोशसंचयः ।
नराधिपः कथमिव नाभिधेयतां प्रपद्यते धनदधनेशसंज्ञयोः ॥ २२ ॥
वचोऽथवा प्रकृतिवशादनुद्धतं महात्मनामलघुतरक्रियाकृते ।
महीरुहामिव कुसुमं महीयसे प्रकल्पते प्रतनु फलाय निश्चितम् ॥ २३ ॥
भवादृशामकृशविभावसद्मनामियं च मे चरितकथासु धृष्टता ।
तदस्मदागमननिमित्तमुत्तम क्षमाभृतामवहितमानसः शृणु ॥ २४ ॥
[1]शरद्दलव्यपगतपञ्चलक्षकाः समा ययुर्नमिजिनराजतीर्थतः ।
इतः परं गतवति चार्धवत्सरे जिनान्तरं मुनिभिरितीरितं [2]हरेः ॥ २५ ॥
शिवाभिधां दधति पवित्रविग्रहे परिग्रहे[3]ऽम्बुधिविजयस्य भूपतेः ।
जगत्त्रयप्रगुणितधर्ममङ्गलो भविष्यति प्रभुरिह नेमिरात्मजः ॥ २६ ॥
सुरेश्वरः स्मरणसमागतं ततः कृताञ्जलिं जनमिममेकहेलया ।
शिवां नभःसरितमिवातिपावनीमुपासितुं तव महिषीं समादिशत् ॥ २७ ॥
इति क्षितेरधिपनिशान्तवर्तिनीं त्वदाज्ञया त्रिभुवननाथमातरम् ।
निषेवितुं परिणतपुण्यसंहतिः समीहते हरिहयकिंकरीजनः ॥ २८ ॥
प्रजल्पितां जलरुहहर्म्यया गिरं निशम्य तां स तनयचिन्तयोज्झितः ।
प्रभुर्भुवः सपदि बभूव भासुरः प्रभापतिर्जलधरलेखया यथा ॥ २९ ॥

---

१. शरद्दलेन हायनार्धेन षण्मासेन. २. हरेरिन्द्रस्य. ३. समुद्रविजयस्य.

घनानंभिप्रकटितरागयोगया प्रबोधितुं जिनवृजिनानि संध्यया ।
सतीव्रतग्रहपरयेव संश्रितां नखप्रभातटलमिषेण पादयोः ॥ ३० ॥
दुरुद्वहस्तनयुगभारधारणश्रमागमादिव तनुमध्यदेशया ।
परिष्कृतामनुकृतकल्पशाखया प्रभावतत्तनुलतया [illegible] ॥ ३१ ॥
वितन्वतीमधरदलस्य तेजसा विसारिणा [illegible] चयेन च ।
कपोलयोर्मृगमदपत्रवल्लरीं सपल्लवां [illegible]मिव ॥ ३२ ॥
नृपाज्ञया तदनु निशान्तमन्तरा प्रवे[illegible]ः सविनयसौविदल्लकैः ।
विलोक्य ताममरचकोरचक्षुषः स्वचारुता[illegible]परिहारमावहन् ॥ ३३ ॥
(कुलकम्)

महीतलावतरणकारणे निजे निवेदिते प्रणतिविधानपूर्वकम् ।
नृपप्रियामतिमुदितामुपासितुं प्रचक्रमे सुरपुरसुन्दरीजनः ॥ ३४ ॥
दधानया मरकतघर्मवारणं कयापि सा सकनकदण्डमाबभौ ।
स्थिराचिरद्युतिलतमब्दमण्डलं नभःश्रिया दिगिव दिवौकसां श्रिया ॥ ३५ ॥
रणज्झणन्मणिमयकङ्कणोत्करैः करैरुदीरितजयजल्पितैरिव ।
उदक्षिपत्क्षितिपकलत्रपार्श्वयोः प्रकीर्णके मुहुरमराङ्गनाजनः ॥ ३६ ॥
यदेव सा मनसि समीहितं दधे सुराङ्गनास्तदविदुरात्मशक्तितः ।
नृपप्रिया न कमपि तेन कर्मणां प्रवृत्तये वचनपरिश्रमं ययौ ॥ ३७ ॥
जगत्त्रयीयुवतिषु देवि केवलं गरीयसी त्वमसि गुणैरनुत्तरैः ।
इमामिति ग्रथितसदर्थगीतयो विकस्वरैर्जगुरथ काश्चन स्वरैः ॥ ३८ ॥
कृतास्पदं महति नितम्बमण्डले प्रियं कृताप्रियमिव नर्तितेक्षणा ।
मृगेक्षणा क्षणमथ कापि पाणिना पटीयसी पटहमताडयत्तराम् ॥ ३९ ॥
स्फुटीभवन्नवरसनीरनिर्झरैरिवापरा विरचितलास्यविभ्रमा ।
भ्रमिक्रियात्रुटदुरुहारनिर्गतैः सभाजनं मणिनिकरैरपूजयत् ॥ ४० ॥
कयापि वाग्विरचितचातुरीभृता समीरितान्युपचितरोमहर्षया ।
भवान्तरे कृतसुकृतानि शृण्वती मुमोच सा निजविभवेषु विस्मयम् ॥ ४१ ॥
दधानया धृतनवरागमम्बरं विभावरीमिव ननु संध्यया शशी ।
कयापि तामभि मणिदर्पणो दधे प्रसाधने क्षणविधये प्रतिक्षणम् ॥ ४२ ॥

कृताङ्कराः क्षितिपकलत्ररक्षणे करस्थितैरसिभिरर्त्यपोपितः।
मनोहृतो कुसुमपभजन्त भीमतां भुजंगसंगलयरुहो लता इव ॥ ४३ ॥
परिस्फुरद्रुचिरपरागहारिणीं स्रजं नवां सुकृतपरम्परामिव।
सुराङ्गना नृपतिमृगीदृशो मुदे दिनं दिनं प्रति वितितान काचन ॥ ४४ ॥
सुधाभुजां युवतिभिरेवमादरादुपासिता समजनि सा सुरीतिभिः।
गुणैर्युतं वपुरपदोषमीयुषी महाकवेरिव विमला सरस्वती ॥ ४५ ॥
अथैकदा त्रिदशविलासिनीजनप्रवर्तिताद्भुतजिनधर्मसंकथा।
ददर्श सा सुखशयिता सती सतीं अपापरिक्षयसमये क्रमादिदम् ॥ ४६ ॥
समुल्लसत्पृथुतरदानवारणं दिशां गजैः सह दधतं शिवारणम्।
कपोलयोः श्रवणकृतालिवारणं गृहाङ्गणस्थितममरेशवारणम् ॥ ४७ ॥
समायतप्रकटितपुच्छनिर्भरं घनारवैर्मुखरितसर्वदिङ्मुखम्।
चलाचलं सुरुचिरकाननश्रियं हिमक्षमाधरमिव सौरभेश्वरम् ॥ ४८ ॥
विपाटितद्विपपतिरक्तपाटलैर्नखाङ्कुशैः कुटिलकठोरकोटिभिः।
मनोहरं गुरुगिरिगह्वरे हरिं त्रिपत्रकं तरुमिव कोरकोत्करैः ॥ ४९ ॥
श्रियं दलज्जलरुहतल्पकल्पितस्थितिक्रियामिलितरजश्चयादिव।
तडिल्लताललितशरीररोचिषं विभूषितां द्युतिभरभव्यभूषणैः ॥ ५० ॥
गुणाश्रयाः सुमनस इत्यसंशयं निवेदयन्मधुरमधुव्रतारवैः।
पुरो महाफलजननाय योग्यतां गतं मुहुः सुरकुसुमस्रजोर्युगम् ॥ ५१ ॥
करोत्करं दधतमखण्डमण्डलं निशाकरं नभसि कुरङ्गसंगतम्।
सषट्पदं महति कदम्बपादपे प्रसूनकं नवमिह चारुकेसरम् ॥ ५२ ॥
प्रसर्पता तिमिरनृपेण सर्वतो नभः शिलातललिखितां प्रशस्तिवत्।
करोत्करैः कुपितमिवोडुमण्डलीं तमोरिपुं विरमयितारमम्बरे ॥ ५३ ॥
पयोधृति प्रगुणशरीरशोभनं तिमिद्वयं कलशयुगं च काञ्चनम्।
सरोवरं कुवलयहंसभूषणं तरङ्गिणीपतिमपि विद्रुमाञ्चितम् ॥ ५४ ॥

---

१. स्रक्पक्षे—द्वितीयान्तमेकं पदम्, सुकृतपरम्परापक्षे—परिस्फुरद्रुचिः सुराग-अपरागहारिणीं वैराग्यशोभिनीं सुकृतपरम्पराम्. २. इन्द्रगजम्. ३. षण्ढम्.

जपारुणैः किशलयितां तमेकतः सुधासितैः कुसुमितकायमन्यतः ।
मणिव्रजैर्मधुकरितं सितेतरैः समुन्नतं तरुमिव सिंहविष्टरम् ॥ ९५ ॥
रणज्झणन्मणिमयकिङ्किणीरवैरिवोद्गिरद्गगनविहारिणां गिरम् ।
विमानमुत्तरलपताकिकाञ्चलैर्निवारयन्स्वयमिव रेणुसंगमम् ॥ ९६ ॥
स्वफूत्कृतज्वलितविषानलोल्कया करालितामिव परितोऽपि बिभ्रता ।
फणावलीमरुणमणिप्रभाविता फणाभृता भुजगनिवासमाश्रितम् ॥ ९७ ॥
परस्परव्यतिकरचित्रदर्शनैर्मरीचिभिर्नभसि विसारिभिर्भृशम् ।
स्वरक्षणव्यसनितया बिडौजसो धनुर्लतां दधदिव रत्नमण्डलम् ॥ ९८ ॥
हुताशनं परिहृतधूमसंगमं प्रसेदुपा ज्वलितमतीवरोचिपा ।
परिक्षताखिलमलशुद्धसंविदं हृदि स्थितं पुरुषमिवात्मगोचरम् ॥ ९९ ॥

इति हृदि यदा स्वप्नश्रेणीमचिन्तितदर्शनां
कलयति किल क्षोणीभर्तुः प्रिया प्रियसंयमा ।
रजनिविरतिव्याख्यादक्षस्तदा कृतगीतिभिः
सुरयुवतिभिर्भूयो भूयोऽप्यताड्यत दुन्दुभिः ॥ ६० ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये गर्भशोधनो नाम
द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

अभ्युल्लसन्नयनवारिरुहस्मितायाः
स्वप्नान्तरातिशयदर्शनविस्मितायाः ।
तस्याः पुरः परिणतार्थपदैर्वचोभिः
श्यामा विराममिति काचिदुवाच देवी ॥ १ ॥

राज्ञा करव्यतिकरे समयावबोधा-
न्मन्दीकृते धृतवतापि विशेषरागम् ।
विश्रस्तमन्दरुचितारकपुष्पमाल-
मेषा नभस्तलिनमुज्झति देवि रात्रिः ॥ २ ॥

यद्यामिनीलतिकया ललितावलोक-
मेकं प्रसूनमुररीकृतलक्ष्मभृङ्गम् ।

१. आकाशशय्याम्.

तच्चन्द्रबिम्बकुसुमं स्फुरितप्रभात-
वाताहतं पतति पश्चिमशैलमौलेः ॥ ३ ॥
मन्ये मधूनि निशि कैरवपत्रपात्रे
पीतानि शीतरुचिना करनालयन्त्रैः ।
नो चेत्कथं पतति निर्गलितांशुकोऽयं
कोकैः सहर्षनिनदैरिव हस्यमानः ॥ ४ ॥
लुप्तं चकोरवयसाममृतान्नसत्रं
छत्रं जगत्त्रयजितो मदनस्य भग्नम् ।
अस्तं प्रयाति हिमधामनि विश्वमान्ये
भेजे भिदामहह कैरवजीवितव्यम् ॥ ५ ॥
उत्तम्भितभ्रमरधोरणितोरणेषु
जातेषु कण्टकगृहेषु सरोरुहेषु ।
द्यौः सांप्रतं जगदराजकमित्यवेत्य
भीतेव गोपयति तारकभूषणानि ॥ ६ ॥
असत्क्रमेण कतमः कथयात्र लोके
नो चञ्चलत्वमधिगच्छति दुर्विदग्धः ।
इत्युच्चकैः कुपितकालकपोलपालि-
लीलामियं हरिहयस्य हरिद्दधाति ॥ ७ ॥
देवि प्रबोधविधये तव वैबुधीभि-
राभिर्वधूभिरभितोऽपि विधीयमानम् ।
आकर्ण्य गीतमुपजातमदा इवैते
धुन्वन्ति संप्रति शिरांसि मुहुः प्रदीपाः ॥ ८ ॥
व्यक्तागसः परिमलेन कुमुद्वतीनां
यत्पद्मिनीभिरुदितप्रमदं ध्रियन्ते ।
तं निश्चितं मधुकराः क्वणितच्छलेन
किंचिद्वशीकरणमन्त्रमुदीरयन्ति ॥ ९ ॥

१. चन्द्ररहितम्. २. अतिरक्तताम्.

एतत्क्षणं कतिपयस्थिततारतार-
　मासारधौतगवलद्युतिवायुवर्त्म ।
द्वित्रैस्तुषारपृषतैर्विषयीकृतस्य
　शोभां बिभर्ति तरलैर्नलिनीदलस्य ॥ १० ॥

नक्षत्रनाथकरपानविधानलौल्या-
　न्निःशेषरात्रिकृतजागरणाश्चकोराः ।
निद्रावशान्मुकुलयन्ति विलोचनानि
　त्वन्नेत्रनिर्जितरुचीनि दिवा ह्रियेव ॥ ११ ॥

सूर्योदयस्य समयस्त्वमिहाधुनापि
　निद्रासि दासि न ददासि मनः स्वकृत्ये ।
इत्यादिकञ्चुकिवचस्तव केलिकीराः
　प्रज्ञावशादनुवदन्ति मनोज्ञदन्ति ॥ १२ ॥

तेजो जपाकुसुमकान्तिकुमुद्वतीषु
　विद्योतते निपतितं नवभानवीयम् ।
भर्तुः कलाकुलगृहस्य वियोगदुःखै-
　र्निर्दारितादिव हृदो रुधिरप्रवाहः ॥ १३ ॥

भिन्नेन्द्रनीलमणिकान्तिभिरन्तरिक्ष-
　लोलैर्मदाद्धनपरागपरीतकायैः ।
तिग्मद्युतेरुदयशैलतटं तुरङ्गै-
　राक्रम्यते सरभसैः कमलं च भृङ्गैः ॥ १४ ॥

संध्यागमे तततमोमृगनाभिपङ्कै-
　र्नक्तं च चन्द्ररुचिचन्दनसंचयेन ।
यच्चर्चितं तदधुना भुवनं नवीन-
　भास्वत्करौघघुसृणैरुपलिप्यते स्म ॥ १५ ॥

मग्नां तमःप्रसरपङ्कनिकायमध्या-
　द्रागुद्धरन्सपदि पर्वततुङ्गशृङ्गाम् ।

प्राप्योदयं नयति सार्थकतां स्वकीय-
   मह्नां पतिः करसहस्रमसावखिन्नः ॥ १६ ॥
देव्याः श्रियः सकलविभ्रमसद्मपद्म-
   मास्थाय पिङ्गलपरागपटावृताङ्गः ।
वर्णेन केवलमलिप्रकरः प्रभाते
   नो कार्ष्ण्यमाकलयति क्रियया च कामम् ॥ १७ ॥
ऽङ्गेन तुङ्गकुचकुम्भभृता विलोल-
   वेणीकरेण निनदद्वलयान्दुकेन ।
गोप्यो वहन्त्य इव कामगजावतारं
   मथ्नन्ति गोरसमसीम गभीरघोपम् ॥ १८ ॥
तापः प्रियस्य विरहे निशि योऽङ्गजन्मा
   जातस्तमह्नि कलितेव ह्रिया रथाङ्गी ।
न्यासीकरोति निभृतं कुलटाङ्गनाना-
   मालम्बनं भवति वा विपदि स्वजातिः ॥ १९ ॥
आस्कन्दतां प्रतिनिशं ककुभः प्रभाते
   प्राभाकरेण महसा सहसार्दितानाम् ।
भूभृद्गुहासु समशीलविपत्तयेव
   संप्रत्युलूकवयसां तमसां च मैत्री ॥ २० ॥
प्राभातिकं तव पुरः सुरसुन्दरीणा-
   माकर्ण्य गीतमचलश्रवणाञ्चलानाम् ।
आरभ्यते करटभित्तिषु कुञ्जराणां
   निर्विघ्नमेव मधुपैर्मदपानगोष्ठी ॥ २१ ॥
एतत्प्रवालदलकोमलकान्तिजाल-
   मार्तण्डमण्डलमदोषतयाभिरामम् ।
लोकान्धकारगरलच्छिदुरप्रभाव-
   माभाति रत्नमिव कालमहोरगस्य ॥ २२ ॥

स्वैरं विहृत्य सरसीषु सरोरुहाणा-
माकम्पनेन परितश्छुरितो रजोभिः ।
भृङ्गावलीमुखरशृङ्खलसूच्यमानो
मन्दं मरुच्चरति चित्तभुवः करीव ॥ २३ ॥

सिद्धिं प्रयातमतिदीर्घतरैस्तपोभिः
संस्मृत्य मन्त्रमिव यं सहसा जनोऽयम् ।
विश्लिष्यते कलुषदोषविषेण देवः
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २४ ॥

छत्त्रत्रयं विशदशारदचन्द्रचारु
यस्य व्यनक्ति भुवनत्रितयप्रभुत्वम् ।
सर्वप्रभावविभवप्रभवप्रभावा-
न्स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २५ ॥

भामण्डलेन वदनेन च भूरिधाम्ना
यः शोभमानविमलाकृतिरेति लक्ष्मीम् ।
आसन्नभानुशशिनः कनकाचलस्य
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २६ ॥

यं वीक्ष्य विस्मयविधायिवपुःस्वरूप-
मत्यन्तविस्मृतशिलीमुखमोक्षकर्मा ।
कामः कराकलितकार्मुक एव तस्थौ
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २७ ॥

यत्पादपद्मयुगसंततसंनिधाना-
दासीदशोक इति कीर्तिपदं द्रुमोऽपि ।
आलम्बनं निरयमापततां जनानां
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २८ ॥

भास्वत्प्रदीपनिभधर्मकथोपदेश-
दीपेन यस्य दलिते तमसां प्रसङ्गे ।
पश्यन्ति मुक्तिपदवीं मुनयः सुखेन
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ २९ ॥

य: कूपदेशपतितं जनमन्धमेव-
मभ्युद्धरत्यलघुवाग्गुणवैभवेन ।
निष्कारणैककरुणाकरतां दधानः
स श्रीजिनो जनयतात्तव सुप्रभातम् ॥ ३० ॥

सा कौमुदीव शशिनः परिपाण्डुबिम्ब-
मह्नाय कैरवमनं स्मितचारुतेव ।
वैतालिकीवचनमित्युपकर्णयन्ती
तत्याज राजदयिता तलिनं तदानीम् ॥ ३१ ॥

देवि स्थिरेण विजयः क्रियतां पदेन
नम्रासु पार्थिववधूषु निधीयतां दृक् ।
द्वाःपालिकाभिरिति संततमुच्यमाना
शृङ्गारमण्डपमगादथ सा सलीलम् ॥ ३२ ॥

उत्तुङ्गपीवरपयोधरबन्धुरश्रीः
स्वच्छाम्बरव्यतिकरं प्रतिपद्य सद्यः ।
रेजे तरां शरदिव स्फुरदाननेन्दु-
र्निद्रादरिद्रसरसीरुहसुन्दराक्षी ॥ ३३ ॥

तस्याः शरीरमपदोषमशेषकान्ति-
माधुर्यमार्दवमुखैश्च गुणैर्गरीयः ।
काम्यं सुकाव्यमिव जातमलंकृतीनां
योगेन रूपकसमुच्चयदीपकानाम् ॥ ३४ ॥

पुष्पावकीर्णकबरीजितकामतूणं
कर्पूरगौरतिलकानुकृतेन्दुबिम्बम् ।
लावण्यनिर्भरमनोहरहारतार-
मालोक्य मण्डनमसौ मुकुरे जहर्ष ॥ ३५ ॥

देवी ततश्च परितोऽपि विराजमानं
सन्माननक्रमकरं[1] वपुरुद्वहन्ती ।

१. सन्मानने क्रमस्य करम्; सन्माना नक्रा मकराश्च यस्मिन्.

मन्दाकिनीव बहुधा महिमाभिरामं
यति स सारसहितं निजजीवितेशम् ॥ ३६ ॥

दन्तावली द्युतिमिषान्मुदमुद्गिरन्त्या
स्वप्नाद्भुतं तदथ संभृतरोमहर्षम् ।
शृङ्गारवल्लिसमया समया नरेन्द्र-
मागत्य राजसुतयाशु तया वभाषे ॥ ३७ ॥

तच्चैकविंशतिजिनेश्वरजन्मसूचा-[1]
व्याख्यातभाविफलमेष निशम्य सम्यक् ।
श्मश्रुप्रसङ्गपलितायितदन्तरोचि-
रुच्चैरुवाच मुदितो महिषीं महीशः ॥ ३८ ॥

स्वप्नान्तरेण हरिणाक्षि विभाव्यसे त्व-
मेतेन संनिहितनन्दनरत्नजन्मा ।
पूर्वोद्गतेन सहसा गरुडाग्रजस्य
पौरंदरी दिगिव दूरतरेतरार्का ॥ ३९ ॥

दन्तीव भूरितरदानविराजमानो
धर्म्यां धुरं कलयितुं वृषवत्प्रगल्भः ।
तेजोधिकः सकलजन्तुषु केसरीव
लक्ष्म्या स्वयंवरविधावुपकीर्णमाल्यः ॥ ४० ॥

पीयूषरश्मिरिव लोकविलोकनीयः
शीतेतरांशुरिव तीव्रतरप्रतापः ।
सुव्यक्तमीनकलशाङ्कितपादपद्मः
स्वच्छः सरोवदनिशं कुमुदं वितन्वन् ॥ ४१ ॥

कल्लोलिनीपतिरिवातिगभीरवृत्तिः
सिंहासनं यदुकुलीयमलंकरिष्णुः ।
वैमानिकैः सततसंभृतभूरिभक्ति-
र्नागालये शशिमुखीमुखगीतकीर्तिः ॥ ४२ ॥

---

१. सूचनं सूचा.

सद्रत्नराशिरिव भास्वरकायकान्ति-
राक्रान्तकर्मगहनोऽग्निरिव प्रदीप्तः ।
भावी सुतः स च भविष्यति तावकीनः
स्वप्नाः सतां नहि भवन्त्यनपेक्षितार्थाः ॥ ४३ ॥

अथ नृपतिरुपेतहर्षपूरः पुरि परितोऽपि महोत्सवान्विधातुम् ।
सदसि समुपविश्य सेव्यमानः क्षितिपगणेन स दण्डिनं दिदेश ॥ ४४ ॥

देवः श्रीमाञ्जयन्तः कलितकरितनुस्तद्विमानं जयन्तं
मुञ्चन्नूर्जे स मासे यमनियमपरः शुक्लपक्षस्य षष्ठ्याम् ।
नक्षत्रे भूरिभाग्यप्रचयपरिचये चोत्तराषाढनाम्नि
क्षोणीभर्तुः प्रियायास्तदनु किल शुचौ प्राप गर्भेऽवतारम् ॥४५॥

कामं [1]संघटितेष्टकान्तविभवे [2]राजत्तुलाकोटिके
प्रोत्तुङ्गस्तनयुग्महेमकलशे तत्कायदेवालये ।
तं देवं विहितावतारमचिरादागत्य सेन्द्राः सुराः
सर्वे नेमुरनर्तिपुर्जगुरगुर्वैतालिकत्वं पुरः ॥ ४६ ॥

स्वकान्तिजलमण्डलप्रथितबुद्बुदभ्रान्तिभिः
सितैरसितरश्मिभिर्बहलशैवलोल्लासिभिः ।
नभस्तलनिपातिभिर्वसुभिराबभासे भृशं
सरोवरमिवाथ नृपतिनाथहर्म्याजिरम् ॥ ४७ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये स्वप्नावलीदर्शनो नाम
तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

[3]मौक्तिकेन शुचिकान्तिशोभिना गर्भवासनिभृतेन तेन सा ।
सिन्धुशुक्तिरिव शोभनीयतां नीयते स्म वसुधेशचेतसः ॥ १ ॥

---

१. संघटितः इष्टस्य कान्तस्य विभवो येन; इष्टकानामन्ते मध्ये वीनां पक्षिणां भव उत्पत्तिर्यत्र. २. राजतां तुलानां भाजनानां कोटिर्यत्रेति देवालयपक्षे. ३. मुक्तिः प्रयोजनं यस्य तेन; मुक्ताफलेन च.

भर्तुराप्तशुभगर्भसंभवा वंशमुन्नतमभूषयच्च सा ।
रत्नजालखचितायताञ्चला निर्मलांशुकपताकिका यथा ॥ २ ॥
प्राप्य नम्रसुरमौलिनिर्गतं पारिजातकुसुमस्रजां रजः ।
तज्जिनेन्द्रजननीपदाम्बुजद्वन्द्वमुज्ज्वलमजायताधिकम् ॥ ३ ॥
वीक्ष्य दिव्यजनमाननीयतां मन्यते स्म नरनाथयोषितः ।
किंकरैरपि कृतार्थतात्मनः किं पुनर्जनकसोदरादिभिः ॥ ४ ॥
श्रीजिनस्य यशसा जगद्बहिः सर्पतेव वपुरन्तरस्थितेः ।
वासरैः कतिपयैर्नृपप्रिया प्राप पक्वशरपाण्डुरं वपुः ॥ ५ ॥
पाण्डिमाविरभवद्यथा यथा तत्तनौ पटुतरस्तथा तथा ।
स्पर्धयेव कुटिलालकावली कालिमापि नितरामभापत ॥ ६ ॥
गर्भनिर्भरतनुं तदन्तरे प्राप्य वृद्धिमधिकां कुचद्वयम् ।
तामखेदयत को न नीयते वृद्धिभिः सहृदयोऽपि विक्रियाम् ॥ ७ ॥
येन विश्वहितहेतुमात्मजं पार्थिवस्य जनयिष्यति प्रिया ।
तेन कौतुकशकुन्तबन्धनत्याजनाय विततान दोहदम् ॥ ८ ॥
राजकुञ्जरमनःप्रहर्षिणी चारुलोलकरदत्तवारिजा ।
गर्भभारभृशमन्थरां गतिं सा बभार करिणीव कानने ॥ ९ ॥
वोढुमक्षमवपुर्विभूषणं रत्ननिर्मितमपास्य सा दधौ ।
वर्णसंनिधिवितीर्णतत्पदं भूरिभङ्गिकुसुमप्रसाधनम् ॥ १० ॥
यामियेप समये महीपतिस्तत्र पुंसवनकादिकां क्रियाम् ।
तामुपेत्य सह नाकिनां गणैर्वासवेन विहितामुदैक्षत ॥ ११ ॥
वज्रवह्निविरहेण हारिणी तत्र संततमदुर्दिनोदया ।
रत्नवृष्टिरजनिष्ट मन्दिरे पार्थिवस्य नवमासवर्तिनी ॥ १२ ॥
शुक्लपक्षभवषष्ठवासरे साथ मासि नभसि प्रसर्पति ।
नन्दनं सकललोकनन्दनं सत्क्रियेव सुपुत्रे समीहितम् ॥ १३ ॥
तेन संनिधिगतेन सुन्दरी सद्य एव तलिनोदरी बभौ ।
वारिवाहशकलेन कज्जलश्यामलेन शशिनः कला यथा ॥ १४ ॥

तस्य जन्मदिवसे दिवौकसां दूरदीपितमहामहे मुहुः ।
प्राप्य काममपरागतामयं वायुरेव किल मन्दतां गतः ॥ १५ ॥
कल्पवासिगृहनादिघण्टिकादत्तमत्तगजचारसंभ्रमैः ।
भूरिकेसरिकिशोरकैर्ध्रुवं ज्योतिषां जगति गर्जितं दधे ॥ १६ ॥
भावनीयभवनेषु संभवन्व्याप विश्वमपि शङ्खनिस्वनः ।
जन्तुजातमिव याचितुं तदा पारितोषिकममुष्य जन्मनि ॥ १७ ॥
दूरमुल्लसितपूरहारिणा सागरेण गुरुवीचिबाहुभिः ।
नृत्यता सफलतामनीयत व्यन्तरामरगृहानकध्वनिः ॥ १८ ॥
इन्द्रनीलमणिभेदशोभिना कायकान्तिपटलेन वेष्टितः ।
घर्मरश्मितनयाह्रदान्तरस्थायिकालियतुलामुवाह सः ॥ १९ ॥
विश्वनाथमभिषेक्तुमेष्यतां वीक्षणार्थमिव नाकिनां श्रियः ।
तुल्यकालमृतवः समारुहन्भूरुहेषु वनपुष्पभारिषु ॥ २० ॥
पुष्पपल्लवफलौघशालिनः सद्य एव वसतिद्रुमास्तदा ।
दिक्प्रचारविनिवर्तिभिर्विभिः काननेषु परिजज्ञिरे चिरात् ॥ २१ ॥
पुत्रजन्म पुरुषाय कथ्यते(?) श्रीसमुद्रविजयः प्रसत्तिभाक् ।
भूमिपत्वमदिशन्न दुर्वहं तत्फलं तु वितितार कोमलम् ॥ २२ ॥
तस्य जन्मभवने प्रबोधिताः सप्त मङ्गलमयस्य दीपकाः ।
आगता इव दिवो महर्षयः सेवनार्थमभुरद्भुतप्रभाः ॥ २३ ॥
राजमानमृगदर्पमैन्दवं बिम्बमंशुचयचन्दनाञ्चितम् ।
तस्य कर्तुमिव मङ्गलक्रियां द्यौरुवाह कलधौतभाजनम् ॥ २४ ॥
सप्रसादमुखसुन्दरश्रियः पुष्पवृष्टिसुरभीकृता दिशः ।
विश्वमानसविलोभनक्षमाः पण्ययोषित इवावभासिरे ॥ २५ ॥
दुर्निमित्तविषवारणौषधेस्तस्य विष्वगुदये जगत्प्रभोः ।
कौतुकं दधशिरेतरां जनैः केतवः प्रतिगृहं यदुद्धृताः ॥ २६ ॥
प्राप्य संगममनेन भास्वता भूरियं भवतु हन्त हर्षिणी ।
चित्रमेतदतिदूरमुज्झितं यज्जयन्तमपि सोत्सवं तथा ॥ २७ ॥

१. रागशून्यतां परागशून्यताम्.

गूढविष्टपविभुप्रभावतः कम्पमापदथ वासवासनम् ।
केलिलोभशफराहतिस्फुरन्नालदण्डमिव हेमपङ्कजम् ॥ २८ ॥
आत्मपीठपरिकम्पकारणं संप्रधार्य च समाधिवर्त्मना ।
संचचाल वलसूदनस्तदा तीर्थनाथमभिषेक्तुमादृतः ॥ २९ ॥
तत्क्षणप्रहतदिव्यदुन्दुभिश्रव्यनादविहितोपहूतयः ।
स्वस्ववाहनजुषोऽथ मन्दिरद्वारमस्य रुरुधुः सुधाभुजः ॥ ३० ॥
वेत्रभृन्महिषमास्थितं पुरो दण्डपाणिमशिवावलोकनम् ।
क्रामतः कनकतोरणाद्बहिर्भर्तुरीक्षणपथादपाकरोत् ॥ ३१ ॥
अप्सरोभिरभितोऽपि मङ्गलं गीयमानमुपकर्णयन्मृगः ।
मीलिताक्षमपथेन संचलन्बाधते स पवनं मुहुर्मुहुः ॥ ३२ ॥
घर्मवारणमभूदभीशुमन्मण्डलादुपरि चारिणां श्रिये ।
आतपः पुनरधोनिजैर्निजैर्वाहनैर्दिविस(प)द्भामवार्यत ॥ ३३ ॥
गाढमग्रगरिनिःसहक्रमाः क्वापि देवकरिणो नु मारुतम् ।
मेघराजिभिरुदूढविग्रहा एव सैन्यसहचारिणोऽभवन् ॥ ३४ ॥
संभृतं जलधरैः क्वचित्पुरो भूरिकान्ति विरराज कार्मुकम् ।
व्योमवर्त्मनि विहारिणो हरेर्मङ्गलार्थमिव रत्नतोरणम् ॥ ३५ ॥
पाणिभिर्निजविमानजालकप्रेपितैरमरयोषितः सुखम् ।
तुङ्गतुङ्गगिरिशृङ्गकाननक्ष्मारुहेषु कुसुमोच्चयं व्यधुः ॥ ३६ ॥
मार्गरोधिनि पयोधरोत्करे दारिते सुरकरेणुभिः पुरः ।
नाभजन्त रथवाजिनः क्वचित्प्रोच्चनीचपथचारदुःखिताम् ॥ ३७ ॥
रत्नसंभृतविशालकुक्षिभिर्लम्बमानविमलाम्बरध्वजैः ।
चञ्चलैः प्रवहणायितं नभः सागरे सुरविमानमण्डलैः ॥ ३८ ॥
भानुसंनिहिततापविक्लवः फेनिलेन वदनेन सैरिभः ।
दूरमन्वतत याम्यदिक्पतेर्निःसरच्छविफलाङ्कुरं घनम् ॥ ३९ ॥
नीचनीतनिभृतेभकुम्भयोर्न्यस्तमस्तकमनस्ततेजसः ।
वासवोऽभिमुखचारिणः क्वचिच्चारुचारणमुनीनवन्दत ॥ ४० ॥

व्योमलङ्घनभुवः श्रमाद्गलद्वाजिफेनलवलाञ्छितैर्घनैः ।
प्राप्यते स्म पवनप्रणोदितैश्चित्रचञ्चलचमूरुचारुता ॥ ४१ ॥
वामदक्षिणपुरोनुवर्तिनां नाकिनां नभसि पाकशासनः ।
आततान निचयेन चक्षुषां तुल्यकालमवलोकसत्क्रियाम् ॥ ४२ ॥
छत्रपङ्कजवनेन कर्दमश्रीरकारि पटलैः पयोमुचाम् ।
तेन तस्य तु समीपवर्तिना बद्धमण्डलबलाकिकारुचिः ॥ ४३ ॥
अप्सरःसु करकङ्कणार्पितश्रीषु वाहनकरेणुकासु च ।
दृष्यतः समभवत्पृथक्पृथक्चारुकुञ्जरमुखस्य चेष्टितम् ॥ ४४ ॥
मामिकां तनुमवेक्ष्य भीषणां मा स्म भैपुरमराङ्गना इति ।
मायया कृतमनोहराकृतिः कौणपाधिपतिरिन्द्रमन्वगात् ॥ ४५ ॥
पार्श्वतः प्रथितवप्रविभ्रमास्तोयदाः शिरसि मण्डपश्रियः ।
अग्रतः सुरविमानसद्मनामङ्गणत्वमभजन्त संहताः ॥ ४६ ॥
खं व्यतीत्य सुरसंचयः क्षणात्क्षोणिसंश्रयनियुक्तवाहनः ।
द्वारकान्तिकनितम्बलम्बिनं नीलमम्बरमिवैक्षतार्णवम् ॥ ४७ ॥
उत्पतन्तमिव सन्मुखं मुदा चञ्चलेन पयसा स्वभावतः ।
अर्घदानमिव बिभ्रतं हरेरूर्मिहस्तधृतशुक्तिमौक्तिकैः ॥ ४८ ॥
स्वच्छवारितललक्ष्यमूर्तिना चारुरत्ननिचयेन संकुलम् ।
विप्रकीर्णमिव मेदिनीतले तारकोत्करकरम्बितं नभः ॥ ४९ ॥
कामलोललहरीकरेरितैः सान्द्रविद्रुमदलैः समौक्तिकैः ।
अङ्कपालिलुलिताः समन्ततो भूषयन्तमिव निम्नगावधूः ॥ ५० ॥
रत्नराजिफणमण्डलोरगं क्रूरकर्मकमठोपपीडितम्[1] ।
अप्रमेयमहिमानमीश्वरं पार्श्वनाथमिव मेचकाकृतिम् ॥ ५१ ॥

(कुलकम्)

दन्तकान्तिचयचन्दनच्छटाः सप्रहासमथ विक्षिपन्निव ।
वीक्ष्य वारिधिवितीर्णलोचनामित्युवाच नमुचेररिः शचीम् ॥ ५२ ॥
फेनमाल्यकृतकुम्भमण्डनं मुक्तवर्त्म जलमानुषैः पुरः ।
देवि वेतसवनाद्विनिःसरद्वारिवारणकुलं विलोक्यताम् ॥ ५३ ॥

१. 'कमठो दैत्यविशेषोऽपि' इति टिप्पणी.

सूक्ष्मबुद्बुदसमाजराजिता फेनराजिरियमायतोज्ज्वला ।
नीरनागपतिमुक्तकञ्चुकश्रीतुलां वहति वीचिसंचिता ॥ ५४ ॥
एतदुल्लसितसान्द्रपल्लवच्छन्नविद्रुमलतावलम्बितम् ।
भाति वेतसवनं करालितं वाडवेन शिखिनेव सर्वतः ॥ ५५ ॥
मुक्तसंख्यतमशङ्खसंकुलैरुल्लसद्भिरतिदूरमूर्मिभिः[1] ।
अन्तिकाच्छबिसकण्ठिकाकुलं मेघमण्डलमधः करोत्यसौ ॥ ५६ ॥
मौलिरत्नरुचिसंचयाञ्चिताः श्यामलाः पयसि पश्य बिभ्रते ।
संचरच्चतुरवारिदेवता वेणिविभ्रममर्मी भुजंगमाः ॥ ५७ ॥
फेनपिण्डकृतसंशयाम्बुधेराजहंसततिरन्तिकस्थिता ।
आननैश्च चरणैश्च लोहितैर्व्यज्यते विकचपद्मलोचने ॥ ५८ ॥
दृश्यमानसततायतभ्रमं नादपूरितदिगन्तमुच्चकैः ।
अस्य वारि मुहुरुल्लसत्यदस्तप्यमानमिव वाडवाग्निना ॥ ५९ ॥
तन्वतः प्लवमुदन्वतः क्षितेर्वारयद्भिरिव मातुरापदम् ।
क्ष्मारुहैरतितरां निरन्तरैस्तीरमस्य परिरुद्धमुद्धलैः ॥ ६० ॥

तत्पूर्वदर्शनस्तस्यास्तूयमानो मरुत्वता ।
चक्रेऽथ मनसः प्रीतिमम्बुधिर्बहुकौतुकः ॥ ६१ ॥

अथ जिनपतिपादद्वन्द्वसंदर्शनोत्कः
प्रथितपरमवेगैर्वाहनैर्वाहिताध्वा ।
विरहमसहमानामागतां तां पुरस्ता-
त्पुरममरसमूहः स्वामिव प्राप सद्यः ॥ ६२ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये देवागमो नाम
चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

प्रविश्य शच्या शुचि सूतिकागृहं समर्प्य मायामयमन्यमीदृशम् ।
प्रभुः कराभ्यां जगृहेऽथ मातृतः कृतप्रणामाय वराय चार्पितः॥ १ ॥

---

१. अतिशयेन मुक्तसंख्याः.

विडौजसः पाणितलेऽरुणाकृतौ स कज्जलश्यामलकान्तिराबभौ ।
प्रतानमाशोकमिवातिकोमलं समाश्रितो बालतमालपल्लवः ॥ २ ॥
तमङ्कपल्यङ्कशयं समुद्वहन्नहर्निशं स्तोत्रपवित्रिताननः ।
सुमेरुमूर्धन्यभिषेक्तुमुच्चकैश्चचाल दन्तावलमास्थितो हरिः ॥ ३ ॥
पुरंदरेच्छासमकालमग्रतस्ततः प्रभोरस्य किलाप्सरोजनैः ।
अनृत्यतैरावतदन्तमण्डलप्ररूढपङ्केरुहपत्रसंततौ ॥ ४ ॥
कलङ्कनिर्मुक्तममुक्ततेजसं पराभवस्याविषयं तमोभुवः ।
प्रणेमुरेनं कतमे न बालकं निशीथिनीनाथमिवोदितं नवम् ॥ ५ ॥
तमङ्कमारोप्य पतिं पुरंदरः प्रमोदविस्तारितभूरिलोचनः ।
बभार शोभां सितपुष्पसंपदो निलीनभृङ्गप्रकरस्य भूरुहः ॥ ६ ॥
सितातपत्रं धनदेन नादधे प्रभोरमुष्योपरि चारुमण्डलम् ।
शशीक्षयव्याधिविमुक्तये ध्रुवं ततान भक्तिं रविरश्मिवारणात् ॥ ७ ॥
चिराय जीवेति जयेति नन्द चेत्यजस्रमाशीः शतगर्भितैर्मुखैः ।
समस्तमाङ्गल्यविधानतत्परास्तमन्वयुर्व्योमनि सप्त मातरः ॥ ८ ॥
मुहुर्मुहुर्यच्चलकर्णचामरैरवीजयत्तं निजपृष्ठवर्तिनम् ।
बभूव मन्येऽभ्रमुवल्लभस्तदा स्वजातिभर्ता सुकृतेन तेन सः ॥ ९ ॥
तडिल्लताभिर्विततामिरञ्चिताः सुवर्णवेत्रद्युतिभिः पयोभृतः ।
बभुर्ध्वनन्तो दिवि तस्य दण्डिनः पुरःसरोत्सारणतत्परा इव ॥ १० ॥
अलिः प्रसूनं प्रसवादिव व्रजन्विशेषनिष्ठः पुरुषं पुमन्तरात् ।
बभूव मन्दार इव स्थिरश्चिरादनुत्तरे तत्र गुणैः प्रभुर्ध्वनिः ॥ ११ ॥
विकस्वरास्तस्य शरीररश्मयः समन्ततः संततहृद्यदर्शनाः ।
अवापुरैरावतदानसौरभभ्रमत्प्रभूतभ्रमरालिविभ्रमम् ॥ १२ ॥
सुरेषु यो यत्र विचित्रकौशलः स तेन विज्ञातगुणेन विस्फुरन् ।
पुरः प्रभोरस्य निरस्य मानितां ननर्त वादित्रमवादयज्जगौ ॥ १३ ॥
पुरंदरस्याथ पुरःसरैः सुरैरुदीरिते निर्भरदुन्दुभिध्वनौ ।
प्रतिध्वनन्तः प्रतिवेलमुच्चकैः कृताट्टहासा इव रेजुरद्रयः ॥ १४ ॥

प्रभावमत्यद्भुतमस्य पश्यतां दिवौकसां दिव्यमृगीदृशामपि ।
स्तवेन पित्रोर्जगतः पवित्रयोर्मुखानि शश्वन्मुखराणि जज्ञिरे ॥ १५ ॥
ददर्श मेरुं मरुतां पतिस्ततः समन्ततः शृङ्गनिषङ्गिवारिदम् ।
प्रभञ्जनाभावनिवृत्तवेपथुं सकज्जलोल्लासमिव प्रदीपकम् ॥ १६ ॥
अजस्रमासन्नसहस्रदीधितिप्रतापसंपादितखेदजन्मभिः ।
विसारिभिः स्वेदजलैरिवोज्ज्वलैर्विराजमानावयवं नदीशतैः ॥ १७ ॥
पयोधरैरञ्चितमेकतः सितैः सितेतरैः काञ्चनकायमन्यतः ।
पितामहं धूर्जटिकैटभाहितप्रदत्तसंश्लेपमिवैकहेलया ॥ १८ ॥
रवेरधः सानुपतत्पताकिनः करावलीमुन्मुखतामुपेयुषीम् ।
निरुन्धतो बिभ्रतमङ्घ्रिपानुपर्यवस्थितानामपि वारितातपान् ॥ १९ ॥
पिशङ्गितास्तीरतरुप्रसूनजैः परागपांशुप्रकरैः प्रपातिभिः ।
दवानलोत्तापविलीनकाञ्चनप्रवाहकल्पाः कलयन्तमापगाः ॥ २० ॥
अदभ्रदर्भाञ्चितमेखलाभुवं दरीमुखोल्लासिहरिध्वनिं मुहुः ।
सरित्प्रवाहैरुपवीतहारिभिर्विडम्बितश्रोत्रियपौरुपाकृतिम् ॥ २१ ॥
विलासवेश्मोपमहेमकन्दरं मनोहरोद्यानसमानकाननम् ।
महौपधीगन्धनिषिद्धपन्नगं नगोद्भवादीनविहीनविग्रहम्(?) ॥ २२ ॥
अमान्तमन्तर्जगतः प्रभापतेर्गभस्तिसंतानमिवोपपिण्डितम् ।
निविष्टनक्षत्रसहस्रमौक्तिकं वसुंधराया इव हेमशेखरम् ॥ २३ ॥
परिष्कृताः सूर्यरथाश्वसङ्गजैः खुरक्षतैः स्पष्टनखव्रणैरिव ।
श्रियं वहन्तीर्विषमेषुवाणजां दधानमाल्हादिपयोधरास्तटीः ॥ २४ ॥
दवोपगूढागुरुकुञ्जजन्मना घनेन धूमेन मरुद्विसारिणा ।
समन्ततः संभृतवन्दनश्रियः प्रधूपयन्तं ककुभः सहाम्बराः ॥ २५ ॥
विभाव्य दुष्प्रापमपापवृत्तिना जिनेन संसर्गमदूरमात्मनः ।
मुदाभिनृत्यन्तमिवानिलाहतैर्विलोलतालद्रुमबाहुभिर्मुहुः ॥ २६ ॥
प्रवृत्तदानोदकदीर्घनिर्झरैः समुद्वहद्भिः कटकानसंकटान् ।
विराजितं काननागनायकैर्नगेतरैः सेवितुमागतैरिव ॥ २७ ॥

१. 'दरीतुल्यं मुखम् । हरिर्नारायणः' इति टिप्पणी. २. अन्यपर्वतैः.

गुहाभिरावासनिवेशमायतैः शिलातलैः काञ्चनविष्टरानपि ।
अशेषयित्वा[1] मरुतामिवैष्यतां निमित्तमातिथ्यमवस्थितं यथा ॥ २८ ॥

(त्रयोदशभिः कुलकम्)

वितन्वतोच्चैः शरदभ्रविभ्रमं नभो विलङ्घ्याभ्रमुवल्लभेन सः ।
अथ प्रमोदादिव सन्मुखागतं तमाप सद्यो गिरिचक्रवर्तिनम् ॥ २९ ॥

द्विपाधिपैस्तुङ्गतरैस्तुरङ्गमैः पताकिभिर्हैमविमानपङ्क्तिभिः ।
अधिष्ठितप्रस्थततिस्ततो जवादवर्धतोच्चैरिव काञ्चनाचलः ॥ ३० ॥

शिखण्डिनां ताण्डवदानपण्डितान्यथो रथानां ध्वनितानि तन्वताम् ।
भ्रमद्भिरासाद्य महीं महीभृतश्चिराय चक्रैश्चरितार्थता दधे ॥ ३१ ॥

घनाध्वनो[2]ऽत्यन्तघनस्य लङ्घनात्परिश्रमं प्राप्य पिपासयाकुलाः ।
पयः समाक्रष्टुमिवातिनिष्ठुरैः खुरैः खनन्तोऽद्रिमयुर्ययुव्रजाः[3] ॥ ३२ ॥

फलानि पुष्पाणि च वल्कलानि वा परोपकाराय वहन्ति हन्त ये ।
बभञ्जुरास्तानपि[4] कुञ्जरास्तरून्कुतो नु मातङ्गकुले विवेकिता ॥ ३३ ॥

तिरोहिते नाकिपताकिनां पदैः पदे निजस्यन्दनचक्रसंचिते ।
अदृष्टपूर्वेव दिनेशसारथेर्दुरुन्नयासीदुदयास्तवर्तनी[5] ॥ ३४ ॥

रुषा वनान्तर्महिषाधिपानभि प्रधावता संयतभिन्नरश्मिना ।
हृतः स्वयानेन विसंस्थुलासनो यमः समालोक्यत कैर्न कौतुकात् ३५

अनोकहः सानुनि यन्न यत्र तत्तदेव देव्यो बहु मेनिरे स्थितौ ।
भवन्ति यद्वा मृगलोचनामनोमुदे प्रदेशास्तरुणाश्रयीकृताः[6] ॥ ३६ ॥

अपास्तपर्याणखलीनबन्धना विभोर्यशः फेननिभेन बिभ्रतः ।
क्षणं निरीक्ष्याश्वमुखीः[7] प्रहेषिताः सुरैर्हया वेल्लयितुं न शेकिरे ॥३७॥

निवर्तयन्तं गतिमुत्तमां भुवो रजस्वलायाः समवाप्य संगमम् ।
मुदं व्रजद्भिः परमां तुरङ्गमैरकारि तैरश्वगुणोचितं तदा ॥ ३८ ॥

पुरोऽवतीर्णप्रियकण्ठमण्डले निषक्तदोःकन्दलमप्सरोजनः ।

---

१. संपूर्णीकृत्य. २. आकाशस्य. ३. 'ययुरश्वोऽश्वमेधीयः' इत्यमरात्सुलक्षणाश्वसमूहाः. ४. 'आस्' इत्यव्ययं खेदे. ५. 'वर्तन्येकपदीति च' इत्यमरः. ६. वृक्षेण यूना च. ७. किंनरीः.

अवातरद्वाहनतो विडम्बयन्गिरेस्तरुस्कन्धविलम्बिनीर्लताः ॥ ३९ ॥
अथावतीर्णामरवर्णिनीपदैः प्रसङ्गमासाद्य सुपर्वपर्वतः ।
बभार रोमाञ्चमिवोच्चकैश्चरन्मणिप्रभां कूरकरम्बितैस्तटैः ॥ ४० ॥
करावकृष्टायतशैवलांशुकान्वनेषु कल्पाश्चलिताः पतिं प्रति ।
तरङ्गहस्तैः परिरेभिरे गजान्कुलेऽपि कान्तासु कुतः सुशीलता ॥४१॥
सदा मदान्धैः प्रसभाभिगामिभिः प्रकम्प्यमानासु सरित्सु सिन्धुरैः ।
विहाय तीरं विहगीभिरुच्चकैरकारि पूत्कार इवारवो दिवि ॥ ४२ ॥
हृतानि पद्मानि मदेन यैर्गजैर्यदृच्छया मज्जनमञ्जुविग्रहैः ।
त एव सत्पद्मरुचः कृतानदैः पराभवेऽपि प्रकृता जडाशयाः॥ ४३ ॥
वितन्वतां दानमनारतोदयं परिस्फुरच्छायतया मनोहृताम् ।
बभूवुरालानपदेऽनुकारिणां करीश्वराणामथ कल्पपादपाः ॥ ४४ ॥
मुखानि कुर्वंल्लुलितालकान्यलं तरङ्गिणीतीरसरोरुहानिलः ।
सुखाकरस्पर्शनिमीलितेक्षणाः क्षणं सिषेवेऽप्सरसो रसादिव ॥ ४५ ॥
लुलद्वृहच्चामरपुच्छमार्जिताः प्रदत्तपुष्पप्रकरा लताकुलैः ।
नभश्चराणां कनकोपलोज्ज्वला निवासयोग्या नितरामभुर्भुवः ॥ ४६ ॥
वनेचरैर्वारिचरैश्च वाहनैर्दिवौकसः काननिर्झराकुले ।
गिरौ समुन्मीलितकेलिभिश्चिरात्स्वजन्मभूवाससुखानि भेजिरे ॥ ४७ ॥
अचिन्त्यचिन्तामणिकुट्टिमोदराः प्रविश्य हैमाः कुतुकेन कन्दराः ।
सुपर्वयुग्मानि मनःसु मेनिरे विमानवासव्यसनेन वञ्चनाम् ॥ ४८ ॥
उपात्तनीलद्युतिरत्नराजिभिर्विजृम्भमाणोज्ज्वलशैवलभ्रमैः ।
निर्वातनिष्कम्पसरःसमीहया मुहुर्मरालैः परिरभ्य रेचिताम् ॥ ४९ ॥
अथास्य शृङ्गे सुरसिन्धुनिर्झरप्रपातझात्कारिणि कारणे मुदः ।
नखाग्रभागोल्लिखितेन्दुपाण्डुरश्रियं हरिः पाण्डुशिलामुपाययौ ॥५०॥
(युग्मम्)

तमीशमुत्तार्य युवार्यमप्रभं पुरंदरः कुञ्जरकन्धराभुवः ।
न्यवीविशद्रत्नमृगारिविष्टरे नयार्जितं पात्र इवार्थमुत्तमः ॥ ५१ ॥

अरोचतानेन विनीलरोचिषा निषेदुषा रत्नमयं तदासनम् ।
समुन्नमन्नूतनमेघमण्डलं तटं बृहद्रोहणभूभृतो यथा ॥ ९२ ॥
विवस्वता श्वेतरुचा सुमेरुणा मिथः समेत्येव निवेशिताकृति ।
सरत्नकुम्भं सितमुष्णवारणं सहेमदण्डं तदुपर्यराजत ॥ ९३ ॥
जिनाभिषेकाय पय:[1]पयोनिधेः पयः समाहर्तुममर्त्यमण्डली ।
गृहीतसत्काञ्चनकुम्भशोभिनी ततान भक्त्या सहपङ्क्तिमायताम् ॥ ९४ ॥
पराङ्मुखारिक्ततयाभिगामिनः प्रभोर्भृतत्वेन करात्करे सुरैः ।
निधीयमानाः कलशा बभापिरे सतामभक्तेः फलमाश्रयस्य च ॥ ९५ ॥
जयेति जल्पत्सु सुरेषु सादरं नटत्सु विद्याधरवर्गवल्गुषु ।
रसेन गायत्यपि चाप्सरोजने सरोजनेत्रे जिनराजमञ्जसा ॥ ९६ ॥
घनं ध्वनन्तः कलशाः पुरंदरप्रणोदिताः कान्तिवितानविद्युतः ।
तमभ्यषिञ्चन्नविलङ्घ्यमम्बुभिः पयोभृतो लोकमिवैकहेलया ॥ ९७ ॥

(युग्मम्)

मृगारिपीठेन तमालनिर्मलप्रभावितानप्रभुसङ्गशोभिना ।
गुरुर्गिरीणां शिखरान्तरापरप्ररूढजम्बूशिखरीव सोऽभवत् ॥ ९८ ॥
जिनाभिषेकाम्बु पतच्छिलातले शनैरुरीकृत्य विसारि सौरभम् ।
समीरणैर्दिक्षु निचिक्षिपेतरां जगत्सु वाञ्छद्भिरिवेह शान्तिकम्॥९९॥
घनैर्जिनस्नानविधानवारिभिर्बभूव गङ्गेति वितर्क्यते मया ।
न चेज्जलत्वे सरितां समेऽपि किं पवित्रता पात्रमियं विशेषतः ॥६०॥
तमीशमिष्टार्थसमर्पणक्षमं दधानमोजः सुकुमारसत्पदम् ।
महाकवेः काव्यमिवोज्ज्वलं ततो व्यधादलंकारमनोहरं हरिः ॥ ६१ ॥
वहन्महाधर्मरथस्य नेमितामरिष्टमुर्व्यां विषमं निहन्त्यसौ ।
इति त्रिलोकीतिलकं समभ्यधादरिष्टनेमिध्वनिना सुराधिपः ॥ ६२ ॥
अथ प्रभोरस्य पुरः पुरंदरः प्रमोदपूरादभिनृत्य कृत्यवित् ।
विधाय सेवाञ्जलिमुज्ज्वलाननस्ततान सत्यार्थम(व)तीमिति स्तुतिम् ६३

[1] क्षीरसागरात्.

निर्हंसि निःशेषमशेषदेहिनां महेश सद्यःप्रभवोऽपि पातकम् ।
प्रपद्य भास्वानुदयं प्रतीक्षते क्षणान्तरं न क्षणदातमःक्षये ॥ ६४ ॥
इदं तव क्षेत्रमवाप्य पावनं सुमानसस्य प्रगुणीकृतक्षमम् ।
सलीलमत्रास्खलितक्रमश्चरन्वृषश्चिरायोपचयं प्रपत्स्यते ॥ ६५ ॥
त्वदंशुभिः सिद्धमषीशलाकिकानिभैर्दृशो यैर्जिनराज नाञ्जिताः ।
अतीन्द्रियार्थप्रतिपत्तिपाटवं न जातु तेषामुपयाति सन्मुखम् ॥ ६६ ॥
परिप्लुतो यैरभिषेकवारिभिर्बभार कैलासदशामयं गिरिः ।
जिनेश तानि त्वयि धर्मपादपे तमीतुपारप्रतिमानि जज्ञिरे ॥ ६७ ॥
प्रयुज्यमाने तव नाम्नि जायतां प्रकाममाद्यः पुरुषो मनीषिणाम् ।
जिनेश युष्मत्पदयोगसंभवेऽप्ययं भवत्युत्तम इत्यगोचरः ॥ ६८ ॥
फणीन्द्रदेवेन्द्रशिरोमणिप्रभाप्रवर्धितांह्रिद्युतिसिन्धुनाधुना ।
त्वया सनाथा पृथिवी जगद्वयीमधः करोतीव निरन्तरोत्सवा ॥ ६९ ॥
त्वमेव कल्याणनिधिः शरीरिणां शिवस्त्वमेव त्वमसि श्रियः पतिः ।
विहाय दृष्टं कतमः प्रकल्पयेददृष्टपूर्वं भगवन्सचेतनः ॥ ७० ॥
त्रिलोककल्पद्रुमजन्मवासरे तवात्र वित्रस्यदरिष्टचारुणि ।
प्रसत्तिमीयुः ककुभोऽप्यचेतनाः किमुच्यते यज्जगतां महोत्सवः ॥७१॥

इति विविधमशेषीकृत्य जन्माभिषेक-
प्रभृति विधिमदम्भस्तत्र दम्भोलिपाणिः ।
उपजननि जिनेन्द्रं प्रापयामास पश्चा-
त्रिदशपरिवृतः सन्नाकलोकं जगाम ॥ ७२ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये जन्माभिषेको नाम
पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

अथ मृगाङ्क इवाभिनवोदितः प्रतिदिनं प्रथितावयवोन्नतिः ।
स पितुरम्बुनिधेरिव संमदं प्रथयति स्म यतिस्मरणोचितः ॥ १ ॥
तमधिगम्य महर्द्धिपरम्परापरिगतं नृपतिस्तनयं ययौ ।
असमसंततिकारणमित्यलं नरमणी रमणीरमणीयताम् ॥ २ ॥

परिहृताखिलदिक्पतिसेवया नवनवार्पितकान्तिविशेषया ।
विभुरलंक्रियते स स संततं परमया रमयारमयान्वितः ॥ ३ ॥
जनविलोचनलोभनतां ययौ द्वितयमस्य निसर्गमनोहृतः ।
वदनशीतरुचौ परिमुग्धता कमलचारुणि [1]चारुणिमा पदे ॥ ४ ॥
अविशदस्वरया परपुष्टया मधुरिवाभिनवः स गिरा शिशुः ।
सितलवेन तथा कुसुमश्रियां भृशमराजत राजतकान्तिना ॥ ५ ॥
दशभिरुल्लसदंशुभिरंह्रिजैर्दश दिशो विदधान इवामलाः ।
अथ शनैर्दययेव भुवः क्रमं स वितातान [2]ततानन मण्डलम् ॥ ६ ॥
कनकघुर्घुरशिञ्जितमञ्जुना चरणचङ्क्रमितेन मितेन सः ।
व्यधित पावनमात्मपितुर्गृहं [3]परमनारमनाकुलमानसः ॥ ७ ॥
चलशिखेन यथा [4]शिखिना लता रुचिरकान्तिकलापभृतामुना ।
विरुरुचे कलुषा जननी तथा [5]विभविना भविनामथ मेदिना ॥ ८ ॥
विनयवादपरैर्गुरुशिक्षया प्रणतमौलिभिरन्वहमागतैः ।
सममसौ सुरलोक[6]कुमारकैररमतारमतामसमानसः ॥ ९ ॥
सचिवसैनिकदण्डधरानुगप्रभृतिराज्यपरिग्रहतागतैः ।
शुचिरसेव्यत दिव्यकुमारकैः परहितो रहितो हृदि मायया ॥ १० ॥
सदसि रत्नमयैर्नृपशेखरैर्मुहुरुदूढ इव प्रतिमागतः ।
अनुवदञ्जरतीजनताशिषः सह सता हसता गुरुणाहसत् ॥ ११ ॥
सकलमेव स वाङ्मयमात्मना सहजनिर्मलबुद्धिरबुध्यत ।
किमु विभाति पदार्थ इवान्यतः स्थिरविभा रविभा निशि दीपकः १२
कलितकान्तिविशेषशरीरया लसदलंकृतिलक्षणया गिरा ।
हृदयहारिपदक्रमया स्वयं विशदया स दयालुमना वृतः ॥ १३ ॥
उपरि सर्वजनस्य स विस्फुरन्प्रभुरथो महसामिव नायकः ।
भृशमभासत संभृतविग्रहो युवतया बत यादवपुंगवः ॥ १४ ॥

---

१. पदेऽरुणिमा. २. विस्तीर्णमुखपरिधिम्. ३. पूजनीयजनसंधम् । अनाकुल०. ४. मयूरेण. ५. समृद्धिमता; मयूरपक्षे—पक्षिण उत्पत्तिर्यस्य तेन. ६. कुमारकैः, अरमत, अरम्, अतामसमानसः.

प्रसभमक्षविकारिणि यौवनव्यतिकरेऽपि गभीरिमगर्भितः ।
स विषयेषु विभुर्ववृतेतमामरसमो रसमोहविवर्जितः ॥ १५ ॥
सकलसिद्धिनिबन्धनमर्थवद्रुचिररूपतया मधुमित्रवत्[1] ।
स गुणरत्ननिधिर्ददृशे जनैः शुचितया कृतया च यथा वृषः ॥ १६ ॥
अथ विकासिकुशेशयलोचनस्तमवलोकयितुं कुतुकादिव ।
उपययौ मधुरर्पितकामिनी स्मरवशो रवशोभितकोकिलः ॥ १७ ॥
पथिकमानसकाननपावकस्मरमिव प्रतिबोधयितुं दधे ।
यमदिशा शिशिरात्ययतः स्फुरत्कमलयामलयामलयानिलः ॥ १८ ॥
कुसुमचापनृपायुधहर्म्यतानवहति स्म भृशं कतरद्वनम् ।
मिथुनपानघटी शु(सु)भगीभवत्तरुतलं रुतलम्पटषट्पदम् ॥ १९ ॥
अपतुषारतया विमलत्विषा हिमकरेण सहेलमनीयत ।
मलयशैलभुवा मरुताभितो विचरता च रताकुलतां जगत् ॥ २० ॥
अपि तरुस्तिलकः पुलकं दलन्मुकुलराजिमिषादपुपत्तनौ ।
मृगदृशीभिरवेक्षित एव तत्किमुदितो[2] मुदितो न युवा जनः ॥ २१ ॥
रुचिरचन्दनराजिमृगीदृशां कमपि लास्यविधिं दिशति स्म यः ।
अनिलमुज्ज्वलसौरभमाकुलास्तमलयो मलयोत्थितमन्वयुः ॥ २२ ॥
मृदुसमीरणघूर्णितविग्रहं किशलयारुणकान्तिमतर्कयत् ।
मदिरयेव वधूमुखदत्तया युवकुलं बकुलं मदविह्वलम् ॥ २३ ॥
वहति शैत्यममन्दगतिश्च खे विरहिदेहविदारणदारुणः ।
कुसुमचापनृपस्य जगज्जये विधुरितो धुरि तोमरतां ययौ ॥ २४ ॥
अमरधोरणिदर्शिततोरणैर्मधुमहोत्सववेश्मतुलां गतैः ।
प्रणयिनः प्रमदासु वितेनिरे कुरवकैरवकैतवमानसाः[3] ॥ २५ ॥
निजकलत्रकुचाननमण्डलस्मृतिभवस्मरसंज्वरमध्वगैः ।
समभवन्सरितः पथि दुस्तराः सरसकोकसुकोकनदश्रियः ॥ २६ ॥
कुसुमबाणसितातपवारणाद्विचिकिलात्सुरभित्वजयाश्रियम् ।
किमपि नो कुसुमेषु समाददे विदलितादलितानमनोहृतः ॥ २७ ॥

---

१. वसन्तसखः कामः.　२. उदयं गतः. ३. दम्भरहितमानसाः.

गिरिषु कन्दरकिन्नरकामिनीजनितगीतरवश्रवणादभूत् ।
हरिणधोरणिरुन्मदमानसा धृतिमिता तिमितायतलोचना ॥ २८ ॥
विशदचन्द्ररुचः स्फुटचम्पकप्रकरचारुदिशो मधुवासराः ।
विदधुरुन्मनसं न कमुत्कटसरवला रवलालसकोकिलाः ॥ २९ ॥
मुहुरुदस्तपतद्वलयावलिः प्रवसता रमणेन तनुर्भृशम् ।
अभिललाष समागममङ्गना न सह का सहकारविलोकिनी ॥ ३० ॥
किशलयैः कुसुमैश्च निरन्तरैः प्रतिदिगन्तमशोकमहीरुहः ।
परिवृतः सहसा कमलेक्षणा क्रमहतो [1]महतोरणसंनिभैः ॥ ३१ ॥
उपहृतैः स्वयमग्रिमसल्लकी किशलयप्रमुखैरनु निन्यिरे ।
अनुनदीतटमुत्कटमन्मथैर्द्विरदनैर[2]दनैर्निजवल्लभाः ॥ ३२ ॥
शशिनि कौसुमतल्पतले जलेऽप्यनुपशान्तवपुर्दवथुव्यथा ।
अरतिमिष्टतमेन वधूश्चिरं विरहिता रहितार पिकीरवे ॥ ३३ ॥
अनुनयैर्न हृदः प्रमदामदं रहयति स्म मनागपि या पुरा ।
स्वयमगामि मधौ प्रियसंनिधाविह तया हतया मदनेषुभिः ॥ ३४
मकरकेतुकलत्रमुखश्रियं यदवहत्सरसीषु सरोरुहम् ।
अगमयन्मणिकुण्डलतां स्त्रियस्तदलसं दलसङ्गिशिलीमुखम् ॥ ३५
मधुरकूजितसूचितवल्लभागममहाय मुहुर्वलिभोजिने ।
करतलेन बलिर्ददेतमामवलया वलयावलिवर्षिणा ॥ ३६ ॥
मृदुसमीरचलालकसंचया रणझुणन्मणिकिङ्किणिका मुहुः ।
ललितकेलिमसेवत दोलया रसमये समयेऽत्र न का वधूः ॥ ३७ ॥
बहलकिंशुकवीथिकया मधुस्त्रिय इवाधरपल्लवलीलया ।
तनुरनीयत खेदमनिद्रिता रुचिरया चिरयातपति(ते)र्भृशम् ॥ ३८ ॥
अनुवनं मधुरध्वनिकोकिलाकलकले सति कर्णपथातिथौ ।
न पथिकः प्रमदां कतमस्तदा स्मरति ना रतिनायकनोदितः ॥ ३९ ॥
उदितनिर्मलमण्डलचन्द्रमः कररसायनसेकगुणादिव ।
क्षितिरुहः कुसुमैर्बभुरुद्गतैः शबलिता वलितात्मतनुश्रियः ॥ ४० ॥

---

१. उत्सवतोरण. २. अदनैर्भोज्यैः.

नवकुसुम्भकरम्बितमम्बरं समदना दधतीव निरैक्ष्यत ।
विकचकिंशुकवीथिकयोल्लसत्तरुणयारुणया वनमेदिनी ॥ ४१ ॥

मधुरसातिशयं दधदुच्चकैरकृतचूततरुर्मधुपावलिम् ।
सततमात्मनि निश्चलसौहृदां भ्रमवतीमवतीर्णनवध्वनिम् ॥ ४२ ॥

कृतकुशेशयकोशविकाशया समदकोकिलयाथ मधुश्रिया ।
धवलपक्षविहंगततेः पतत्कुमुदया मुदयाप्यत चेतसः ॥ ४३ ॥

धवलधामनि निर्मलमूर्तितां स्वरविकस्वरतां पिकयोपितः ।
कृतवता मधुना विकृतिर्दधे प्रथयताथ यतात्मसु मन्मथम् ॥ ४४ ॥

तुहिनतानवमातपतीव्रतां विदधतः सुतरां मधुवासराः ।
विरहिणामतिदुःसहतां गताः सुगुरवो गुरवोपचयं क्षपाः ॥ ४५ ॥

कान्तारभूमौ पिककामिनीनां कां तारवाचं क्षमते स सोढुम् ।
कान्ता रतेशेऽध्वनि वर्तमाने कान्तारविन्दस्य मधोः प्रवेशे ॥ ४६ ॥

जहुर्वसन्ते सरसीं न वारणा बभुः पिकानां मधुरा नवा रणाः ।
रसं न का मोहनकोविदार कं विलोकयन्ती बकुलान्विदारकम् ॥४७॥

मधुरेणदृशां चक्रे शशिना मानविप्लवम् ।
मधुरेण दृशां चक्रे मन्मथज्वलितात्मनि ॥ ४८ ॥

ततिरतन्यत भीरुषु चाटवी युवभिराप्यत पुष्परुचाटवी ।
रुरुचिरे शिशिरात्ययचार वः शशिरुचोऽन्य ुतस्य स चार वः॥ ४९॥

दृष्ट्वा वसन्तमथ तं मधुपानवन्तं
यूनां गणं विदधतं मधुपानवन्तम् ।
याति स्म रैवतिकभूभृति यादवानां
वर्गस्ततिं वहति रम्यतया वनानाम् ॥ ५० ॥

नेमिर्विशालनयनो नयनोदितश्री-
रभ्रान्तवुद्धिविभवो विभवोऽथ भूयः ।

---

१. मदनो वृक्षविशेषश्च. २. 'तरुणं कुब्जवृक्षे ना रुचके यूनि तु त्रिषु'. ३. क्षीणताम्. ४. विदारकं निरपत्यं यथा स्यात्तथा । निरपत्यायाः संभोगक्षमत्वात्. ५. मृगलोचनानाम्. ६. भ्रमरान्पालयन्तम्, ७. मद्यम्. ८. वनानाम्. ९. विगतभवः.

प्राप्तस्तदेति नगरान्नगराजि तत्र

सूतेन चारु जगदे जगदेकनाथः ॥ ५१ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये वसन्तवर्णनो नाम षष्ठः सर्गः ।

---

सप्तमः सर्गः ।

वृत्तं व्रजति न भङ्गं यदीयतत्त्वैकचेतसाम् ।

विदुषां [1]जन्मभयास्तरसास्ते भान्त्येतस्मिन्गुणाः ख्याताः ॥ १ ॥

[2]मुनिगणसेव्या गुरुणा युक्तार्या जयति सामुत्र ।

[3]चरणगतमखिलमेव स्फुरतितरां लक्षणं यस्याः ॥ २ ॥

वनमिह दृष्ट्वा कुसुमसमृद्धम् ।

चरति नगं किं शशिवदनोऽन्यम् ॥ ३ ॥

अत्र महीभृति भूभृन्नाभौ गोत्रविभूषण पुष्प्यत्युच्चैः ।

काननराजिमुखेषु व्यक्तामोष्ठदलाकृतिकां बन्धूकम् ॥ ४ ॥

विद्युन्माला दण्डोद्दामश्रीकाः कामं मेघा नाम ।

कृष्णच्छत्रच्छायां तुङ्गा बिभ्रत्यस्मिन्नेते नागाः ॥ ५ ॥

यदूनामुत्तंस त्रिदशपरिचर्योक्तमहिम-

न्सदैवास्मिन्दावज्वलनमतिदूरत्रसदिभम् ।

लसद्विद्युद्दामा प्रशमयति संतापितनुगं

पयोधारासारैर्नवजलदमाला शिखरिणी ॥ ६ ॥

इहावहन्न का तटी जलेरुहां रजो गिरौ ।

विभो सदा सुराचलप्रमाणिका सुवर्णगौः ॥ ७ ॥

प्राप्य वसन्तं हर्षादम्भः पूर्णनदीके माद्यद्भृङ्गम् ।

अत्र गिरीन्द्रे श्रीमन्नागं क्रीडति नित्यं दिव्यं युग्मम् ॥ ८ ॥

कासारेष्विह हि निम्नक्षीरापूररुचिरेषु ।

गौराङ्गी हृदि रतेच्छां दत्ते हंसरुतमीश ॥ ९ ॥

---

[1]. जनमभयाः तरसा इत्यष्टौ गणाः. २. सप्त. ३. चरित्राश्रितं, पादाश्रितम्. ४. ५। नगणयगणात्मकं शशिवदनाछन्दः.

चम्पकचूतैर्भूतलभागप्रापितपादैरत्र समस्ता ।
केन न जज्ञे सिंहनिनादक्ष्माभृति भूमी रुक्मवतीयम् ॥ १० ॥

का न श्रीमन्नभिनवकामव्यालश्रेणी कलयति कुम्भौ ।
अस्मिन्मत्ता वरमणिजालौ वन्या लक्ष्मीरिव कुचतुङ्गौ ॥ ११ ॥

इह कुसुमसमृद्धे मालिनीभूय सानौ
विपुलसकलधातुच्छेदनेपथ्यरम्यम् ।
वपुरपि रचयित्वा कुञ्जगर्भेषु भूयो
विदधति रतिमिष्टैः प्रार्थिताः सिद्धवध्वः ॥ १२ ॥

अङ्गहारविधौ सुरवध्वा प्रस्तुते सविधस्थिततारम् ।
बिभ्रतस्तपनामृतभासौ कोऽस्य नैव तटो मणिरङ्गः ॥ १३ ॥

[1]रोचिरीश्वररथोद्धता घनप्रस्थगैरिकरजस्ततिर्गिरौ ।
अत्र राजतितरां दवानलोद्दामदीप्तिरिव लोहितान्वगम् ॥ १४ ॥

नलिननयन स्वामिन्नस्मिन्मुनीन्द्रवने सदा
सरवरतनो नित्योत्फुल्लप्रसूनमहीरुहे ।
रविकरपरीतापाच्छायामुपेत्य विसाध्वसा
लसति हरिणी सार्धं वध्वा कुरुङ्गकृपोऽन्वगम् ॥ १५ ॥

अमरनगरस्मेराक्षीणां प्रपञ्चयति स्फुर-
त्सुरतरुचये कुर्वाणानां वलक्षम रंहसम् ।
इह सह सुरैरायान्तीनां नरेश नगेऽन्वहं
सुरतरुचये कुर्वाणानां वलक्षमरं हसम् ॥ १६ ॥

बध्नाति रक्तोपलरश्मिदत्तशोणद्युतिर्निर्झरवारिवीथी ।
अत्रेन्द्रवज्राहतशैलकुञ्जकीलाललक्ष्मीं बहुधातुभङ्गौ ॥ १७ ॥

जपाहितरुचिस्तनुं मदनदर्शनीयामसौ
जनप्रमदकारणं दधदुपात्तसन्मानसः ।
यशोभिरिव निर्झरैः प्रसरवद्भिराभात्यलं
गरिष्ठकरुणालयस्त्वमिव देव पृथ्वीगुरुः ॥ १८ ॥

---

१. सूर्य. २. सिंहस्य. ३. वृक्षविशेषाणाम्. ४. वेगम्.

इहोच्चावचग्राववैषम्यनेयप्रचाराः प्रभो विभ्रतः स्वादु तोयम् ।
धुनीनां भुजङ्गप्रयातं प्रवाहा दधत्याशु भग्नं व्रजन्तः सुवायौ ॥ १९ ॥

आगत्यागत्य पुष्पस्तवकशतपतद्भृङ्गभारावनम्रं
भर्तः कान्तारमेतद्बकुलविटपिनां प्रेरिता मन्मथेन ।
दिव्यस्त्री स्रग्धरास्मिन्न भवति कतमा प्राप्य पुष्पावचायं
श्रान्त स्वेदोदबिन्दुप्रकरहरपरा मन्दमन्दारवायौ ॥ २० ॥

जगत्पते जलरुहरोहिसौरभं समीरणं परिचितनिम्नगाव्रजम् ।
वहत्यसाविह परिशोभितानिशं गणैर्महीभृति रुचिरा वनस्थली॥२१॥

मोहोन्मुक्तप्रतिभचमरी पुच्छसंमार्जितोर्वी
भव्याभासे सुमहति गिरावत्र चित्रार्थसानौ ।
द्वौ चन्द्रार्कावपि रमयते पुष्पवर्षेण मन्दा-
क्रान्तावातैः क्षितिरुहततिः क्रान्तपर्यन्तशृङ्गैः ॥ २२ ॥

जनं गुणैर्भूपयसि त्वमद्भुतप्रतापवंशस्थममुं यथा निजैः ।
वसुंधराभृद्वलयं तथामरा श्रयं सदायं गिरि[1] सत्यवैभवः ॥ २३ ॥

सहजाणुरौपधिरियं महती ज्वलिता भवत्यधिनिशं महसा ।
प्रमिताक्षरा तव सदर्थबहुप्रसरेण वागिव लसद्यशसः ॥ २४ ॥

यदुपान्तिकेषु सरलाः सरला यदनूच्चलन्ति हरिणा[2] हरिणाः ।
तदिदं विभाति कमलं[3] कमलं[4] मुदमेत्य यत्र परमाप रमा ॥ २५ ॥

वरणाः प्रसूननिकरावरणा मलिनां वहन्ति पटलीमलिनाम् ।
तरवः सदात्र शिखिजातरवः सरसश्च भाति निकटे सरसः ॥ २६ ॥

इह परिविद्धा सुमदनबाणैः कुसुमविचित्रा तरुवरवीथी ।
नवमधुमत्तं मधुपनिकायं न खलु बिभर्ति प्रियमिव नेयम् ॥ २७ ॥

नरवरेह रतिगेहसंनिभं जलदजालकनिभाङ्गसुन्दरम् ।
इदमुपेत्य तटमुर्वसी कथां वितनुते सह सुरैः प्रियंवदाम् ॥ २८ ॥

मोहोन्मुक्तावत्र सद्वृक्षजातौ गौरीतातोत्तुङ्गशृङ्गे नगेशे ।
वानप्रस्थप्राणवृत्त्यै भविष्णुः शालिन्येषा[5] सारिणी[6] सर्वदैव ॥ २९ ॥

---

१. वाण्याम्, पर्वतेषु च. २. वायुना सह. ३. कमलयुक्तम्. ४. जलम्, अलम्. ५. शालियुक्ता, छन्दश्च. ६. स्वल्पनदी.

भसरजःपरिकल्पितभक्तिकभद्रगजेन्द्र इवायमसंनिभ ।
भाति पुमानिव निर्मलमौक्तिमदाम दधत्सरिदावलिभिर्ननु ॥ ३० ॥

नवमधुपद्वयविभ्रमसज्जं यदुवर सौरभराजि तवेदम् ।
प्रतिनदि तामरसं मुखरागं कलयति चारुदलाधरलेखम् ॥ ३१ ॥

भव्यजनानां विरचितयत्न प्रांशुतटोर्वीस्थलकमलेषु ।
गौरवसीम्नि क्रियत इहोर्ध्वैः प्रत्यवबोधो दिनकरपादैः ॥ ३२ ॥

समकाञ्चनलोष्टमनुन्मनसं सकलेन्द्रियनिग्रहबद्धरसम् ।
जिन तोटकमागमनस्य भवे शिरसैष बिभर्ति तपस्विगणम् ॥ ३३ ॥

नलिननयननिर्गामिनिर्झरोघप्रतिमरुचिभिरह्नां क्षयेषु नूनम् ।
व्रजति बहुलतामीश चन्द्रिकात्र प्रतिमितमणिसानूत्थरश्मिपूगैः ॥३४॥

जनस्य चेतो भवविकारमुद्धतं समर्पयन्ती मधुरकेलिनादजम् ।
गजेन्द्रगामिन्निह हि मञ्जुभाषिणी पिकी सदा नित्यसहकारकोरके ॥ ३५ ॥

मार्तण्डारिस्या(श्या)मलसत्काम्बुदजातौ शैलाधीशे निर्मलनानागुणकाय ।
सद्यः पुष्पामोदगुणानन्दितभृङ्गं किं किं नास्मिन्मत्तमयूरं वनमीश ॥३६॥

सरसप्रभञ्जनधुता पतत्रिजप्रसवोद्भवेन रजसा तनीयसा ।
अलिनन्दिनीयमनपेक्षितक्षणा जगदीश वासयति पाटला नगम् ॥३७॥

जलोरसिस्थपद्मपत्रकञ्चुकं वपू
रसाकुलं वहत्यसौ स्फुरत्सितद्विजम् ।
अशोकमालिनी नदी यथा वधूर्वरा
लसद्गुणौघलोहितांशुकावृताङ्गम् ॥ ३८ ॥

अत्र नित्यस्फुटत्पुष्पलीलातरौ किन्नरद्वन्द्वसंगीतरम्ये गिरौ ।
काननान्यागता का न दिव्या वधूः स्रग्विणी जायते जातचेतोभवा ॥३९॥

भूतनिकायशुभप्रद मेरुगिरिसनाभौ
काननराजिभिरत्र हि मन्मथशरमाला ।
शश्वदुदीरितकोरकवीथिभिरुरुदेव
प्रेमणि संश्रियतेऽलिगुपिच्छनिकरकाया ॥ ४० ॥

---

१. सान्द्रपदस्यैव छन्दसो नामान्तरं भवेत्. 'सान्द्रपदं स्याद्भतनगलैश्च' इति छन्दोमञ्जरीपरिशिष्टम्.

अच्युत विलसन्मणिचक्रकः काननावलिभासुरविग्रहः ।
रोचिषा हरितेन महानसौ लोकनाथ विडम्बयते नगः ॥ ४१ ॥

इह वसति विपुलगुणमणिरवनौ
विजलजलपटलधरधवलतनौ ।
सततसरिदनुकृतसुविकटजटे
धरणिभृति गिरिश इव शशिकलिका ॥ ४२ ॥

आरुह्य शैलेऽत्र निःशेषधातौ तत्त्वज्ञ कीर्तिं तवाभाषमाणा ।
बध्नाति गीतं लयग्राहिरागं [1]देवी न का निर्मितानेकभङ्गम् ॥ ४३॥

शिवाश्लिष्टकायः परित्यक्तमायः ।
अयं सोमराजी क्षपायां नगेशः ॥ ४४ ॥

मत्तेजक्षतजोक्षिताग्रनखरन्यासेन लक्ष्मीमसौ
जत्वारोपकृतामिवेह दधती निःशेषभूभृद्वसौ ।
तत्त्वज्ञाननिधे व्यनक्ति वसुधा शार्दूलविक्रीडितं
गच्छत्कोलकुरङ्गकासरशशप्रायाखिलश्वापदा ॥ ४५ ॥

कठिनगवलकज्जलश्यामलश्रीभृतामद्भुतैर्धातुभिर्भ्राजमानावनौ
रवभरकलिता बृहन्मर्दलाडम्बराणां ततस्तोकपुष्पौघलीलातरौ ।
कनकनिकषभास्वराकारविद्युल्लतामण्डितानाममुष्मिन्विशाले गिरौ
विबुधमिथुनकैर्गुहासु स्थितैर्नीयते चण्डवृष्टिर्घनानां क्वणत्तुम्बरौ ॥ ४६ ॥

उपलवर्त्मसु कन्दरभूषु च द्रुतविलम्बितमुच्चलितं घनम् ।
इह महीमखिलावनिभृद्विभौ व्रजति निर्झरवारि निरन्तरम् ॥ ४७ ॥

अनुकृतविषमप्रहरणकलिका
क्षितिरुहनिवहैः परिलसदवनौ ।
भनिकरसदृशद्युतिरनुविपिनं
लसति सुविशदा बहुरिह हि नगे ॥ ४८ ॥

गौरा नित्यभ्रमरविलसिता नव्याब्जानां ततिरतिसरसा ।
एषा क्षिप्ता खलु नगगुरुणा शङ्के दृष्टिस्त्वयि सविकसना ॥ ४९ ॥

---

१. विष्वक्कमालाया नामान्तरं भवेत्.

रम्भारामा कुरवककमलारम्भारामा कुरवककमला[१] ।
रम्भा रामाकुरवक कमलारम्भारामाकुरवककमला ॥ ५० ॥

वृक्षैर्वसन्ततिलकायितपुष्पजात-
भद्राकृतिव्यतिकरैर्भृतसूर्यकुम्भैः ।
जातप्रमोदगुरुरेष विशेषतुङ्गौ
पूर्वापरावनुकरोति गिरिर्गिरीशौ ॥ ५१ ॥

नोद्यानचन्द्रकिरणाहितमारशङ्काः[२]
सर्पाः स्फुरन्ति शबरीरहितैः पुलिन्दैः ।
नोद्यानचन्द्रकिरणाहितमारशं का[३]
नेच्छन्ति साकममरैरिह कन्दरासु ॥ ५२ ॥

हेलाविहारिचमरीगुरुपुच्छयष्टि-
सन्मार्जनीभिरपनीतरजःकणासु ।
कुर्वन्त्यमुत्र लतिकाः कुसुमोपहारं
वातैर्धुताः क्षितिरुहां विपिनस्थलीषु ॥ ५३ ॥

---

१. इदं पद्यगन्धिगद्यं **वाग्भटालंकारे** महायमकोदाहरणतयोपन्यस्तम्. व्याख्यातं चेदं तद्याख्यातृभिः. तथाहि—'अत्र पर्वते कुर्भूमिः । शोभत इति संबन्धः । कीदृशी भूमिः । रम्भारामा रम्भाभिः कदलीभिर्मिश्रा आरामा यस्यां सा । तथा—अवककमला । अवकं वकरहितं कं पानीयं मलते धारयतीत्यवककमला । तथा—अरमत्यर्थं भारामा भैर्नक्षत्रैरा ईषद्रामा । कर्बुरेत्यर्थः । तथा—कुरवककमलारम्भा । कुरवका वृक्षविशेषाः, कमलानि पद्मानि, तेषामारम्भा उत्पत्तयो यस्यां सा कुरवककमलारम्भा । तथा—रामा रम्या । अथवा—कुरवककमलारम्भारामा कुरवककमलानामारम्भेणोद्गमेन आ ईषद्रामा मनोज्ञा ।हे अकुरवक ।न विद्यते कुत्सितो रवः शब्दो यस्य सोऽकुरवः । अकुरव एव अकुरवकः । हे अकुरवक हे कोमलध्वान । नेमेः संबोधननाम तत् । पुनः कीदृशी कुः । कमलारम्भारामा । कमला लक्ष्मीः,रम्भा अप्सरसः, ता एव रामाः स्त्रियो यस्यां सा । गिरिभूमौ रामाः क्रीडार्थमायान्ति । अत्र कमलारम्भा एव रामा ज्ञेयाः । तथा—अकुरवककमला । कुत्सितं राजन्त इति कुरा न कुरा अकुराः शोभमाना वका वृक्षविशेषाः कमला हरिणविशेषाश्च यस्यां सा अकुरवककमला ॥' इति. २. वनमयूरयुद्धारोपितमरणशङ्का इत्यर्थः. ३. उद्यानेन चन्द्रकिरणैश्च धारितं कामसुखं का नेच्छन्तीत्यर्थः.

आहूतकाञ्चिरुचयो नवबर्हदाम्ना
भूर्जत्वचा रचितचारुदुकूललीलाः ।
गुञ्जाफलग्रथितहारलताः सहेल-
मेताः पुलिन्दललनाः सरसि व्रजन्ति ॥ ५४ ॥

इत्थं स्वसारथिगिरा गिरिराजशोभां
प्रत्यर्पितेक्षणयुगो युगदीर्घबाहुः ।
सान्द्रद्रुमावलितले कुशलैः प्रक्लृप्त-
मार्योऽथ पट्टपटमन्दिरमध्युवास ॥ ५५ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये पर्वतवर्णनो नाम सप्तमः सर्गः ।

---

अष्टमः सर्गः ।

अथ क्रीडागिरौ तत्र विचित्रतरुसंततौ ।
चेलुर्वनविहाराय माधवाः सावरोधनाः ॥ १ ॥

नूपुरध्वनिभिः स्त्रीणां (वि)जिहीर्षूणां प्रबोधितः ।
वनेषु व्याकुलं कं न चक्रे कन्दर्पकेसरी ॥ २ ॥

पदं विन्यस्य हृदये भीरुभिर्गुणसंयुताः ।
चित्रं यादववीरास्ते निन्यिरे सममात्मना ॥ ३ ॥

अन्योन्यवदनाम्भोजन्यस्तनेत्राणि काननम् ।
व्रजन्ति मिथुनान्यापुः स्खलितानि पदे पदे ॥ ४ ॥

द्विरेफमण्डलं दृसाञ्शासितुं तरुणान्वने ।
कन्दर्पसार्वभौमस्य भ्रमच्चक्रमिवाबभौ ॥ ५ ॥

वायुना विनयेनेव नोदिताः श्लथबन्धनैः ।
महीरुहो महीशेभ्यः पुष्पैरर्घमिवादधुः ॥ ६ ॥

चलत्पक्ष्मदलोद्दामदर्शनं[1] मदनाकुलम्[2] ।
विभ्रमोद्भासिनीं[3] विभ्रद्घनामलकमण्डलीम्[4] ॥ ७ ॥

---

१. दर्शनं दृष्टिः, अवलोकनं च. २. मदनो वृक्षविशेषः, कामश्च. ३. विभ्रमः पक्षिभ्रमणम्, विलासश्च. ४. घनानामामलकानां मण्डलीम्, घनाम् + अलकमण्डलीम्.

उल्लसत्तिलक[1]श्रीकं कर्णिकार[2]चितोदयम् ।
अशोक[3]सुभगालोकमाबद्धनवमौलिकम्[4] ॥ ८ ॥
हरिणा[5]धिष्ठितं नित्यं चेतोहारिपयोधरम्[6] ।
सत्पत्र[7]वल्लिसच्छायं कोमला[8]ङ्गलतान्वितम् ॥ ९ ॥
रम्भा[9]भिरामं सततं स्फुरद्[10]गुणकदम्बकम् ।
यादवीनां कुलं क्रीडावनं तत्र विवेश तत् ॥ १० ॥
क्षतमूलामपि नखैरुल्लसत्पाणिपल्लवाम् ।
दोर्लतां कमितुः स्कन्धे क्षिप्त्वा कापि ययौ वने ॥ ११ ॥
अन्तःपुरपुरन्ध्रीणां नूपुरध्वनिपूरितः ।
गिरौ निर्झरझात्कारश्चकार श्रवणोत्सवम् ॥ १२ ॥
विहरन्ती वने कापि संक्रान्तमदनग्रहा ।
नितम्बभारनिर्वेदं न विवेद मनागपि ॥ १३ ॥
अर्धार्धेन स्रजः साधुः कश्चिदप्रीणयत्प्रिये[11] ।
संभावितायाः प्रथमं तथाप्यन्याकरोत्क्रुधम् ॥ १४ ॥
सौरभेण स्पर्शेनेव वञ्चितानामलिव्रजाः ।
वने कुसुमहर्तॄणां लेगुः पृष्ठे मृगीदृशाम् ॥ १५ ॥
[12]वर्णप्रसूनं गृह्णन्त्यो गृहिण्यः पृथिवीभृताम् ।
चक्रुः करनखन्यासात्सकोरकमिवास्पदम् ॥ १६ ॥
नव्यनव्यप्रसूनेच्छादूरचारेण काचन ।
स्वेदार्द्रमूर्तिः क्षीरोदनिर्गता श्रीरिवाबभौ ॥ १७ ॥

---

१. तिलको द्रुमविशेषः, विशेषकं च. २. कर्णिका + रचितोदयम्, कर्णिकार + चितोदयम्. ३. अशोको वृक्षविशेषः, शोकाभावश्च. ४. माला, लताविशेषश्च. ५. हरिणा कृष्णेन, हरिणैश्च. ६. पयोधराः कूपादयः, स्तनाश्च. ७. समीचीनपत्त्रयुतलताभिः सच्छायम्, समीचीनेन कुङ्कमरचितललाटभूषणेन शोभायुतम्. ८. कोमलाङ्गयो लताः, कोमला अङ्गलताश्च. ९. कदली, देवाङ्गनाविशेषश्च. १०. स्फुरद्गुणाः कदम्बा यत्र, स्फुरन् गुणकदम्बो यत्र इत्येवं यादवीकुलपक्षे. वनपक्षे यथायोग्यमर्थो ग्राह्यो नास्मल्लिखितक्रमेणैव. ११. प्रियाद्वयम्. १२. तालवृक्षविशेषाः.

चारुप्रसूननेपथ्यभारिण्यो हरिणेक्षणाः ।
रेजुः सकोपकन्दर्पक्षिप्तैरस्त्रैरिवाचिताः ॥ १८ ॥
पादाहत्या प्रफुल्लस्य कङ्किलेः कुसुमं स्त्रियः ।
मौलौ दधाना जगदुः कार्मणं स्त्रीषु मार्दवम् ॥ १९ ॥
मार्जयन्वनसंचारश्रमस्वेदाम्वुविप्रुषः ।
अङ्गसङ्गी मृगाक्षीणां प्रियोऽजायत मारुतः ॥ २० ॥
प्रयुक्तः प्रेयसैकस्यां हारः कुसुमनिर्मितः ।
तत्सपत्न्याः प्रहारोऽभूद्व्यथादानादसंशयम् ॥ २१ ॥
पद्मकेसरसंख्यानद्यूते द्वित्राः कयाचन ।
सपत्न्यां हारिताः कान्तसेवापर्यायरात्रयः ॥ २२ ॥
प्रसादनाय यद्यूना लीलाकमलमर्पितम् ।
तेनैव ताडितस्तूर्णं कयाप्येष सकोपया ॥ २३ ॥
केशश्रीकान्तवपुषां योषितां सुमनोगणाः ।
भक्त्या भूषाकरत्वेन वने सफलतां ययुः ॥ २४ ॥
कस्याश्चिदाननं रेजे श्रमस्वेदोदविन्दुभिः ।
चन्द्रविम्वमिवाम्भोधिमध्यसंसक्तमौक्तिकम् ॥ २५ ॥
कौसुमं सुमनोहारि सुवहं च सुगन्धि च ।
वहुमन्यत तन्वीभिः काम्यं काञ्चनमण्डनात् ॥ २६ ॥
कर्णाभरणसंप्राप्तैः प्रसूनैः पद्मचक्षुषाम् ।
पत्रवल्ल्यः कपोलेषु पुष्पिता इव रेजिरे ॥ २७ ॥
रवित्रस्ततमःस्तोमशरण्येषु महीरुहाम् ।
मिथुनानि निकुञ्जेषु प्रविष्टानि रतिं ययुः ॥ २८ ॥
भाले विहारस्वेदेन खिन्ने संसजता भृशम् ।
चकार पद्मपत्रेण काचित्तिलकमात्मनः ॥ २९ ॥
हासहेलाविलासस्य कीर्तिं कुसुमधन्वनः ।
पुष्पमालाममन्यन्त युवानो योषिदर्पिताम् ॥ ३० ॥

दृढैरन्तर्गुणैर्बध्वा बद्धः कश्चिदसंशयम् ।
स्रजा नियन्त्रितः कोपाद्यन्न प्रचलितुं क्षमः ॥ ३१ ॥
पुष्पकन्दुकमुत्क्षिप्तमेकेनान्येन गृह्णती ।
पाणिना व्यरुचत्काचित्कणत्कङ्कणचारुणा ॥ ३२ ॥
नखप्रसूनपादाब्जपाणिपल्लवलीलया ।
रेजे राजवधूः काचिद्वनलक्ष्मीरिव स्वयम् ॥ ३३ ॥
वने वधूजनः पुष्पैः कृतहारोऽपि हेलया ।
विहाररुचिरेवासीत्स्त्रीवृत्तं वेत्ति कोऽथवा ॥ ३४ ॥
श्रमस्वेदाम्भसः पात्रे गात्रे हरिणचक्षुषाम् ।
दृशो निपत्य सानन्दं यूनां जग्मुर्जलार्द्रताम् ॥ ३५ ॥
मन्ये नेपथ्यकुसुमैर्वासिताः कुकुरस्त्रियः ।
अन्यथा कथमेतासां सुरभिः श्वासमारुतः ॥ ३६ ॥
समाकृष्टा मुखामोदगर्भकौसुमसौरभैः ।
तासामुपरि भृङ्गाली केशकान्तिरिव व्यभात् ॥ ३७ ॥
मध्यं दिनार्कसंतापोमार्ष्टुमाग इवात्मनः ।
जलानि विजिहीर्षूणां तासां स्वेदजलं व्यधात् ॥ ३८ ॥
यूना स्खलितगोत्रेण धृतेऽप्यातपवारणे ।
उपाचीयत संतापो नाहीयत मृगीदृशः ॥ ३९ ॥
दत्तातपत्रा कान्तेन काचिन्नाम्नान्ययोषितः ।
नाससाद तथा छायां तत्सपत्नी यथोन्मदा ॥ ४० ॥
हृतप्रसूनसर्वस्वं वनिताभिरथो वनम् ।
रोदितीव तदा किंचित्कणन्मधुकरी गिरा ॥ ४१ ॥
साक्षादिव स्मराक्षाभिः प्रेयसीभिः समं नृपाः ।
तेऽथ कर्तुं जलक्रीडां जग्मुः श्रान्ता जलाशयम् ॥ ४२ ॥
सहासपुण्डरीकास्यं सालापं पक्षिकूजितैः ।
नृपमैत्र्या धृतानन्दं स्थाने जलमजायत ॥ ४३ ॥

निर्मले नितरां नीरे नारीणां प्रतिबिम्बितैः ।
कल्लोललोलैः खेलन्त्यो जलदेव्योऽनुचक्रिरे ॥ ४४ ॥
पुरःसरैः पुरोपास्तक्रूरसत्त्वेषु वारिषु ।
सुभ्रुवः सभयोत्कोपं शनैरन्तःपदं व्यधुः ॥ ४५ ॥
राजदारांस्तरङ्गाग्रहस्तैरालिङ्ग्य बिभ्रतः ।
नदस्य सहसोड्डीनाः प्राणा इव विहंगमाः ॥ ४६ ॥
जितपद्मा मुखैर्न्यस्तवीचिस्त्रिवलिशोभया[1] ।
सरसी क्षालयामास पादान्पक्ष्मलचक्षुषाम् ॥ ४७ ॥
पयोमध्ये पुरन्ध्रीणां निःशब्दैर्नूपुरैः स्थितम् ।
सदाचरणलीनानां मौनं श्रेयो जडान्तरे ॥ ४८ ॥
हृताम्भोजवनं दूरवित्रासितविहंगमम् ।
स्त्रीभ्यः क्रुद्धमिवाराजदङ्गरागारुणं पयः ॥ ४९ ॥
नितम्बैराहतः क्षोभं प्राप्य वीचिकरैश्चलैः ।
कौतुकादिव कासारः कुचान्पस्पर्श योषिताम् ॥ ५० ॥
नखक्षततिः स्त्रीणामङ्गरागे हृते जलैः ।
व्यक्ता वर्णावलीवासीत्कायस्थस्य मनोभुवः ॥ ५१ ॥
आकण्ठमम्बुमग्नस्त्रीमुखैरलिसमालकैः ।
क्रीडोत्खातारविन्दश्रीः पुनः सरसि संदधे ॥ ५२ ॥
अकारणखलस्येन्दोरवस्कन्दमिवागतम् ।
वीक्ष्य वक्त्रोत्करं स्त्रीणां सैरश्चक्रैः[2] पलायितम् ॥ ५३ ॥
योषिद्यावककस्तूरीरक्तकृष्णा सरस्यभूत् ।
द्यौः समुन्मीलितश्यामा संध्यासंधिरिव क्षणे ॥ ५४ ॥
तरद्भिर्नीलवसनैर्मज्जन्तीनां मृगीदृशाम् ।
अनपाकृतशेवालमिव जातं सरोजलम् ॥ ५५ ॥
च्युतं सरसि केशेभ्यः कामिनां केतकीदलम् ।
भृङ्गैर्युतं तरलैभे सधीवरतरीतुलाम् ॥ ५६ ॥

---

१. तिरस्कृततरङ्गा. २. कासारचक्रवाकैः.

धौतान्तःपुरनेपथ्यकस्तूरीपङ्कचन्द्रकैः ।
बभूव पद्मिनीपत्रशोभा सरसि भूयसी ॥ ५७ ॥

ओष्ठपल्लवपादाब्जतलेभ्यः क्षालितोऽम्बुभिः ।
रागः प्रकृतिरक्तेभ्यो नालक्ष्यत मृगीदृशाम् ॥ ५८ ॥

क्रीडावनविहारोत्थश्रमः कमलचक्षुषाम् ।
अङ्गरागश्च तोयेन तुल्यकालमपाकृतौ ॥ ५९ ॥

बभूव लोहितच्छायैर्नारीपदनखेन्दुभिः ।
संजातविद्रुमलताकन्दोद्भेद इवाम्बुधिः ॥ ६० ॥

चित्राजलधरेणेव यूना कस्याश्चिदाननम् ।
सिक्तं सस्यमिवाम्लायज्जलैरन्यावलोकिना ॥ ६१ ॥

जलधौतकपोलस्था स्त्रीणां नखपदावली ।
उत्खातपत्रलतिकमूलस्थानतुलां दधौ ॥ ६२ ॥

क्रमव्यक्तीभवद्गात्रश्रियो राजस्त्रियस्ततः ।
बहिर्जलाशया जग्मुः कृतकान्तकरग्रहाः ॥ ६३ ॥

करपल्लवदत्तासु योषितां जलबिन्दवः ।
केशवल्लिषु मुक्ताथ जन्मभ्रान्तिं वितेनिरे ॥ ६४ ॥

मुखेन्दुपक्षविमुखी श्यामा चिकुरवल्लरी ।
ततान योषितां तोयविप्रुषस्तारका इव ॥ ६५ ॥

स जलानि विलासिन्यो विहाय वसनान्यथ ।
अभ्राणीव दिशोऽन्यानि निर्मलाङ्ग्यः परीदधुः ॥ ६६ ॥

उपचक्रे मरुत्तासां हरन्नम्बुकणोत्करान् ।
प्राप प्रत्युपकारं च सद्यः संक्रान्तसौरभः ॥ ६७ ॥

अङ्गरागो वयस्याभिरङ्गनाङ्गेषु निर्ममे ।
रञ्जितानि तु चेतांसि यूनामिति महाद्भुतम् ॥ ६८ ॥

कनिष्ठिकानखाग्रेण दर्पणार्पितचक्षुषा ।
कृतः कयापि सीमन्तः पन्था रतिपतेरिव ॥ ६९ ॥

कापि कुण्डलनीलाश्मरश्मिमालोक्य दर्पणे।
मुहुर्ममार्ज नेत्रान्तं लग्नकज्जलशङ्कया॥ ७०॥
रामा श्यामरुचिः कापि मुक्तालतिकया बभौ।
नक्षत्रमालयेवोच्चैः पयोधरजुषा निशा॥ ७१॥
तुङ्गं स्तनपदं प्राप्य गुणगर्भितविग्रहः।
हारोऽहसदिवान्यानि भूषणानि मृगीदृशाम्॥ ७२॥
दक्षिणः कङ्कणं वामे वामश्चिक्षेप दक्षिणे।
रक्तौ मिथः करौ स्त्रीणामभूतां तुल्यसत्कृती॥ ७३॥
कुण्डलं कङ्कणस्थाने निक्षिपन्ती मृगेक्षणा।
कापि सख्या निराचक्रे प्रियप्रहितमानसा॥ ७४॥
न्यस्यमाना मुहुर्यूना कस्याश्चन नतभ्रुवः।
स्विद्यति प्राप नैवास्थां कपोले पत्रवल्लरी॥ ७५॥
पूगत्वङ्मार्जितैर्दन्तैर्मुखं कस्याश्चिदाबभौ।
निजस्वामिशशिभ्रान्त्या सेवायातैरिवोडुभिः॥ ७६॥
कुण्डं हुतस्य कामाग्नेः कामं यौवनयज्वना।
नाभिमण्डलमानर्च काचिच्चन्दनदानतः॥ ७७॥
इत्थं प्रकाश्य नामात्मप्रसाधनविधिश्रियम्।
जलाशयतटात्तन्व्यश्चेलुः सहचरैः सह॥ ७८॥
सरसा सरसैः शब्दैः पक्षिणां दक्षिणानिलः।
आदिष्ट इव तं राजलोकमन्वग्ययौ मृदुः॥ ७९॥
अथ सलिलविलासं यादवानामुदारैः
सह निजनिजदारैस्तत्र वीक्ष्येव रम्यम्।
दिनपतिरपि खिन्नः खं व्यतीत्यातिमात्रं
करकलितदिनश्रीः सागरान्तं जगाम॥ ८०॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये जलक्रीडाभिधानो नाम अष्टमः सर्गः।

---

नवमः सर्गः ।

अतिथीभवन्तमथ तं वसुक्षये शिरसा बभार रविमस्तभूधरः ।
उपकारिणां स्वयमहो महस्विनामुपकर्तुमन्तरमतीव दुर्लभम् ॥ १ ॥
परिलङ्घनीयगगनान्तमागतस्तरणिर्बभूव सहसारुणप्रभः ।
कलुषीभवत्यनुकलं दिनात्यये प्रभुरप्युपैति यदिवानुगाश्रियम् ॥ २ ॥
कनकप्रवालशुककायकोमलैर्दिननाथसारथिरथाश्वरश्मिभिः ।
छुरिता इवासदृशकायकान्तयः प्रकटीबभूवुरथ सांध्यवारिदाः ॥ ३ ॥
लसमानमीन[1]मकरो महात्मनामुपमानमच्छतर[2]वारिसुन्दरः ।
प्रतिबिम्बिते सति पतङ्गमण्डले कलयांचकार जलधिर्नभस्तुलाम् ॥ ४ ॥
सवितुः समीपमुपसर्पतः सतः प्रतिबिम्बमम्बुनि निकामनिर्मले ।
रुरुचेतरां रुचिररत्ननिर्मितं धृतमर्घपात्रमिव वारिराशिना ॥ ५ ॥
रविरस्तभूधरशिरःसमाश्रितो वनवह्निरुत्थित इवैक्ष(क्ष्य)त क्षणम् ।
पतितः क्षणेन च ततः पयोनिधौ विततान वाडवविभावसुभ्रमम् ॥ ६ ॥
लहरीहृतप्रथितफेनसंचयैर्वदनैः समुद्धुरितवक्रकन्धराः ।
जलधिं विगाह्य रथवाजिनो रवेर्गगनाध्वलङ्घनपरिश्रमं जहुः ॥ ७ ॥
नियतिप्रवातवशतस्ततो जवादवसानमीयुषि दिनेशदीपके ।
जनजातरूपहृतये तमश्चयः प्रविवेश चौर इव विश्वमन्दिरे ॥ ८ ॥
प्रलयं गते दिनपतौ विधेर्वशात्परिरभ्य गाढमितरेतरं दिशः ।
समदुःखिता इव पतत्रिणां रवै रुरुदुस्तमःसिचयसंवृताननाः ॥ ९ ॥
अतिमात्रपीतवसुधारसं क्रमात्परिमन्दतां गतमहःपतेर्महः ।
अधिगन्तुमात्मपटुतां पुनर्दिने ध्रुवमौषधीरभजत प्रतिक्षपम् ॥ १० ॥
करुणस्वरं विलपतोरनेकशः पुरतो निशाविरहिणोर्विहंगयोः ।
विपदं विलोकयितुमक्षमा ध्रुवं नलिनी सरोजनयनं न्यमीलयत् ॥ ११ ॥
नवनीलिरागरहिताम्बरा सती तमसा समं सहचरेण सर्वदा ।
इह वारिराशिपरतीरमण्डलादथ वर्वरीव विचचार शर्वरी ॥ १२ ॥

---

१. मीनमकरौ यादोविशेषौ राशिविशेषौ च. २. अच्छतरेण वारिणा, अच्छो यस्तरवारिस्तद्वत्सुन्दरः.

अपरावनीधरतटात्पयोनिधौ पततः सतो झगिति झम्पया रवेः ।
व्यरुचन्समुच्छलदतुच्छपाथसामिव विन्दवो गगनसीम्नि तारकाः ॥१३॥
यदचिन्त्यशक्तिकलिताः किलौषधीः परिकीर्तयन्ति कृतिनस्तथैव तत् ।
कथमन्यथा सुतिमिरोदयक्षणे प्रकटं कुतोऽपि समभून्महन्महः ॥१४॥
न रथो न रथ्यतुरगा न सारथिस्तमसा तथापि रजनीसमागमे ।
रविणा विमुक्तमुररीकृतं जगत्समयो हि कार्यजननो वलं वृथा ॥ १५॥
दिवसे दिवाकरकरोत्कराहतिप्रथितान्धभावविधुरैः स्थितं हि यैः ।
तिमिराञ्जनेन निशि निर्मलीभवन्नयनैरुलूकविहगैरदर्शितैः ॥ १६ ॥
निशि कैरवैर्मुकुलितैर्विजृम्भितं कमलैर्निमीलितमहाविकासिभिः ।
भविनां हि दैववशवर्तिनां भवेन्न विपन्न संपदपि संततास्थिरा ॥ १७ ॥
प्रहरैर्विभक्तचतुरङ्कविग्रहा कविचक्रचित्तरसदानपण्डिता ।
विरराज संनिहितराजनायका नवनाटिकेव भुवने विभावरी ॥ १८ ॥
उदितेन तीव्रतरतेजसा हि नः प्रशमं महो गमितमंशुमालिना ।
तिमिरं विपक्षमपि तारकैरिति प्रतिपद्य विस्फुरितमम्बरे ध्रुवम् ॥ १९॥
वहुलान्धकारपटलेन वारिते प्रशरे दृशां स्खलितलक्ष्यदर्शनः ।
मिथुनानि गीतमुखराणि मन्मथः स्वरपातिभिः प्रहरति स्म सायकैः॥२०॥
उदयाद्रिसंनिहितवर्तिनः प्रभा शशलाञ्छनस्य पुरतः प्रसर्पिणी ।
अथ वारिराशितटफेनसंततिभ्रममाततान तिमिरान्तिकस्थिता ॥ २१ ॥
क्षणमेकमेककलया कलानिधेस्तदनु प्रसारि रुचि भस्मना ततः ।
सविकासकैरवकपालमालया तुलयांचकार हरमिन्द्रदिङ्गनः ॥ २२ ॥
असृजा विलिप्त इव नव्यचन्द्रिकाप्रसरेण किंचिदुपनीतशोणिमा ।
क्षणमर्धचन्द्रदलिताग्रविग्रहस्तमसः कवन्ध इव संचयोऽभ्रमत् ॥ २३ ॥
तमसा विलुप्तमिह पूर्वपर्वतः क्षितिमण्डलं निजमवेत्य सर्वतः ।
मृगवर्णलाञ्छितमदर्शयत्पुरः पृथुताम्रशासनमिवेन्दुमण्डलम् ॥ २४ ॥
उदयेऽभिताम्ररुचिरिन्दुरुल्लसच्छशलाञ्छनच्छवि रराज तत्क्षणम् ।
मृगनाभिपत्रलतिकापरिष्कृतः क्षणदाकपोल इव कुङ्कुमारुणः ॥ २५ ॥

तिमिरस्य विश्वजयिनो निपातनप्रतिमल्लतां कलयता कलावता ।
अरुणेन कोपनतयेव विग्रहः सहसा न्यरुद्धत समुद्धतैः करैः ॥ २६ ॥
प्रथमं जपाकुसुमकान्तिकुङ्कुमस्तवकोपमं दशशताक्षदिङ्मुखे ।
ददृशे नभो महिषमूर्ध्नि चन्द्रकप्रतिमं ततो धवलमिन्दुमण्डलम् ॥ २७ ॥
किरणप्ररोहशरराजिराजितं भुवनं विजेतुमभिवाञ्छतो निशि ।
श्रवणान्तकृष्टवलयीकृतं बभौ मदनस्य चापमिव बिम्बमैन्दवम् ॥ २८ ॥
वनमालया कलितकान्तिसंपदः प्रथमानपादतटिनीविराजिनः ।
उदयाचलस्य सविधे विधुः श्रियं श्रयति स्म शङ्ख इव दानवद्विषः ॥ २९ ॥
स्फुटराजमानकरराजिदन्तुरं दधतोद्धुरं मुखमिवोरुमण्डलम् ।
दलिताञ्जनोदरसहोदरद्युतिः कवलीकृतस्तिमिरराहुरिन्दुना ॥ ३० ॥
हिमदीधितिः स्फुटकलाकलापभृत्प्रकटीभवद्गिरिपयोधरश्रियः ।
उदतारयन्नवनिशामृगीदृशः स्वकरैस्तमोनिकरनीलकञ्चुकम् ॥ ३१ ॥
प्रतिदिङ्मुखप्रसृतकान्तिजालके शशभृत्युपव्रजति लुब्धकाधिपे ।
परिहृत्य पङ्कमिव कश्मलं नभो निभृतं ययौ तिमिरशूकरः क्वचित् ॥ ३२ ॥
इति वार्तमेव रजनीकरोदये मुदितः समुल्लसति यत्पयोनिधिः ।
क्षुभितः स किंतु विरहार्तिनिश्वसत्पथिकाङ्गनामुखमरुद्भिराहतः ॥ ३३ ॥
तिमिरोरगप्रसरबाधकप्रभाकलितं कुलाय इव वायुवर्त्मनि ।
द्विजराजदाररजनीसमुद्भवं शशिबिम्बमण्डलमिव व्यराजत ॥ ३४ ॥
रदिनो दिशां प्रियतमा इवाभ्रमोः पृथिवीभृतस्तुहिनपर्वता इव ।
सरितश्च जह्नुतनया इवाभवज्जगदाप राजमहसा परां श्रियम् ॥ ३५ ॥
निखिलोपतापशमनोऽपि सत्पथप्रतिपत्तिहेतुरपि पक्षपातिनाम् ।
सुकृतोपदेश इव वारिजन्मि(न्म)नां प्रतिबोधने प्रभुरभून्न चन्द्रमाः ॥ ३६ ॥
अवलम्ब्य तत्किरणजालमायतं वसुधावतीर्णमधिरोहणीसमम् ।
अधिरोहति स्म शशिसौधमुच्चकैः कमला विहाय कमलालयस्थितिम् ॥ ३७ ॥

---

१. कलानां षोडशानां समूहम्, चतुःषष्टिः कलाश्च कामशास्त्रे प्रसिद्धाः २. गिरितुल्यस्तनयोः पर्वतानां मेघानां च. ३. 'जालं समूह आनायः' इत्यमरः. ४. 'यक्षे चन्द्रे च राजा स्यात्' इति त्रिकाण्डशेषः. ५. 'निश्रेणिस्त्वधिरोहणी' इत्यमरः.

प्रथमं मनांसि तदनु प्रियाः सखीः सहसा प्रहित्य निजवल्लभान्तिके ।
प्रयियासया स्वयमथाङ्गनाजनः प्रतिकर्मनिर्मितिसमाहितोऽभवत् ॥३८॥
यशसेव पुष्पधनुषो हिमद्युतेर्महसेव चन्दनरसेन सुभ्रुवः ।
अनुलिप्तनिर्मलशरीरयष्टयः स्फटिकाश्मरत्नघटिता इवाबभुः ॥ ३९ ॥
सहजारुणद्युतिभृतोर्नतभ्रुवां चरणारविन्दतलयोरयं वृथा ।
निहितः किमर्थमिह यावको जगुर्मणिनूपुराणि रणितैरिति ध्रुवम् ॥४०॥
मणिभूषणावलिरदीपयत्तरां स्थितमेव रूपगुणमेणचक्षुषाम् ।
न खलु क्षपारमणरोचिषां कुतोऽप्युपनीय रोपयति रम्यतां शरत् ॥४१॥
मृगनाभिपत्रलतिका कपोलयोर्लिखिता सखीभिररुचन्नतभ्रुवाम् ।
तिमिरावलीवदनमिन्दुशात्रवं सहसा गतेव शरणं तनीयसी ॥ ४२ ॥
उरसि प्रगल्भकुचकुम्भभासुरे मणिहारयष्टिमयतोरणावलीम् ।
सविधे स्ववल्लभसमागमोत्सवे रमयांचकार चतुरः प्रियाजनः ॥ ४३ ॥
मुकुरे कुरङ्गकदृशावलोकितस्तिलकः[1] कयापि सविलासमेकया ।
सरसः प्रसाधितसमस्तकाननः[2] सहसा चकार कुसुमेषुसंभवम्[3] ॥ ४४ ॥
कुसुमानि बन्धनमवापुरङ्गना शिरसि स्थितिं समधिगम्य दुर्लभाम् ।
यदि वा भजन्ति विपदं त एव ये पदमुन्नतैरनुभवन्ति सद्गुणाः ॥४५॥
अमृतोपमाधरदलाः कलस्वराः सुकुमारविग्रहभृतः सुदर्शनाः ।
अथ धूपनात्सुरभयो नतभ्रुवः सकलेन्द्रियार्थनिधयोऽभवन्नृणाम् ॥४६॥
तुहिनांशुना मदनबालबन्धुना हृतमत्सरान्धतमसाः सुमध्यमाः ।
व्यसृजन्निजेशमनसां प्रसादनप्रतिपत्तिपात्रमथ दूतिकाजनम् ॥ ४७ ॥
भवति व्यवस्थितमनोरथस्थितेः प्रसृतेऽधुना धवलधाम धामनि ।
शशिकान्तमश्रुसलिलस्रुतिप्लुतं भवति स्फुटं मुखमधीरचक्षुषः ॥ ४८ ॥
नलिनीदलानि न न हारयष्टयस्तुहिनांशवो न न जलार्द्रमंशुकम् ।
घटते तदङ्गपरितापशान्तये विपदोऽथवा स्वजनसङ्गभेषजाः ॥ ४९ ॥

---

१. वृक्षविशेषोऽपि. २. काननं वनम्, ईषदाननं च. ३. कामोत्पत्तिं पुष्पेषु संगमं च.

अनुरागमायतदृशः कृशेतरं त्वयि न प्रियंवदतया वदामि तम् ।
लिखितत्वदाकृतिरनेकशस्तया रतिवासभित्तिरपि तेऽभिधास्यति ॥ ९० ॥
अभिधाय सानुनयमित्यनेकशो निशि दूतिकाभिरुपनीतगौरवाः ।
स्वयमेव गन्तुमनसोऽथ वल्लभाः प्रययुर्निजं निजमभिप्रियाजनम् ॥९१॥
(चतुर्भिः कुलकम्)

अवलोक्य कापि पतिमागतं पुरः सहसैव दुर्वहनितम्बमण्डला ।
विनयान्वितापि न शशाक सत्वरं परिहर्तुमासनमधीरलोचना ॥ ९२ ॥
[1]स्वगृहागमप्रचलितं प[रा]वधूरवगत्य कापि निजहेरिकीगिरा ।
सह देहदाहलहरेण पद्मिनीदलकल्पितं सपदि तल्पमत्यजत् ॥ ९३ ॥
दृढमासजेरुरसि वक्रमर्पयेर्मणितं च पूर्वगुणितं प्रकाशयेः ।
प्रियसंगमेष्विति सखीभिरीरिताकृतकं प्रकोपमकरोन्न वा वधूः ॥ ९४ ॥
रमणो न यावदुपयाति मन्दिरं निशि तावदद्भुतमनोभवा परा ।
तदुपान्तिकं प्रचलिताथवोत्सुकं प्रणयः करोति कतमं न वस्तुषु ॥ ९५ ॥
विधाय वेषान्रुचिरान्सरागं जगाम तन्वीं निशि सर्व एव ।
सद्वेषरागः पुरुषः प्रयाति को वा न योगं तनुभिः प्रकामम् ॥ ९६ ॥
दूरोद्दीपितधामकामदहनोत्तप्तानि संदंशक-
प्रायैरंशुभिरायतैर्विरचयन्नुच्चैर्वपुःपीडनम् ।
लोहानीव खराणि मानविधिना द्वन्द्वानि देवो मिथ-
श्चन्द्रः संघटयांचकार ललितक्रीडामहासूत्रभृत् ॥ ९७ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये चन्द्रोदयवर्णनो नाम नवमः सर्गः ।

---

## दशमः सर्गः ।

अथ मन्मथज्वलनवृद्धिविधाविव सर्पिरर्पितमनः प्रमदम् ।
विशदं सुगन्धि सरसं शिशिरं मधु पातुमारभत कामिजनः ॥ १ ॥
उररीकृतानि मुदितैर्मधुपैर्मधुनः पदानि सुरभीणि भृशम् ।
कनकोज्ज्वलानि कमलानि चमुश्चषकेषु तुल्यगुणयोगितया ॥ २ ॥

---

१. अनवगतार्थमेतत्पद्यम्.

असमग्रवाग्भिरवधूतगलद्वसनैर्धरापतनधूसरितैः ।
मधुपानलौल्यवशतो विवशैरनुभूयते स्म तरुणैः शिशुता ॥ ३ ॥
मदिरोदकप्लवपराभवतः परिहृत्य नूनमधरं विधुरः ।
यदुयोषितां नयनवारिरुहद्वितये व्यधादरुणिमा वसतिम् ॥ ४ ॥
प्रणतिप्रशान्तमपि कापि वधूरधिकृत्य विप्रियमपेतमु(म)दा ।
तरसावतंसकमलेन मुहुर्मुहुराजघान दयितं कुपिता ॥ ५ ॥
रमणेषु तालपटहप्रहतिप्रवणेषु सत्सु हरिणीनयनाः ।
ननृतुः श्लथांशुकनिवेशलसज्जघनस्थलाः समदरक्तदृशः ॥ ६ ॥
अमृतांशुबिम्बसदृशानि वधूवदनानि युक्तमुदितानि बुधैः ।
कथमन्यथार्पितममीभिरभूद्दयितस्य मद्यमपि नाम सुधा ॥ ७ ॥
अतिमात्रपीतमदिरासलिलैरुपतर्पितस्य मदनस्य मुहुः ।
नवपल्लवा इव सताम्ररुचो नयनाञ्चलाश्चलदृशां विबभुः ॥ ८ ॥
वनिताजनस्य मधुना हृदयाद्विहितेऽत्र या जवनिकापगमे ।
विदधद्धनुर्निजमधिज्यमथ प्रकटीबभूव भगवान्मदनः ॥ ९ ॥
यदुयोषितां विशदमद्यपयःप्रतिबिम्बितानि वदनानि पुरः ।
रभसेन पानरसिकानि बभुश्चषकोदरेषु पतितानि यथा ॥ १० ॥
अधरस्य धौतजतुनेव रुचिप्रचयेन रक्तमिव रागकृते ।
उपयुज्यमानमभिमानहरं हरिणीदृशां मधु समर्थमभूत् ॥ ११ ॥
प्रतिबिम्बितैस्तपनकान्तदृषच्चषकोदरेष्वथ चकोरदृशः ।
मधु वल्लभैः सह रसात्सहसा वदनैर्द्वितामिव गतैरपिबन् ॥ १२ ॥
न वितृष्णतामुपययौ मदिरासलिलं पिबन्नपि स कामिजनः ।
मदशक्तिकम्पितकरादमुतः स्वयमेव किंतु चषकं व्यगलत् ॥ १३ ॥
श्रवणावतंसकमलातिथिभिर्मधुपैः कृते सरसगीतरवे ।
घनघूर्णमाननयनान्तभुवा सुदृशां भ्रुवा मदवशान्ननृते ॥ १४ ॥
मधु पीयतेऽन्यवनिताभिधया हृदयेश्वरेण गदिता दयिता ।
अरुणेक्षणा सपदि गद्गदवाक्कुपिता मदश्रियमवापतमाम् ॥ १५ ॥

इतरेतरं मुखसुराग्रहणक्षणचुम्बनोपचितभावभरैः ।
सपदि प्रसारितभुजामिलितैर्मिथुनैरतन्यत रताय मनः ॥ १६ ॥
सुदृशो ह्रियं हृदि यतो दधते हृतवाससो रमणमेव रतौ ।
परिरेभिरे तमदयं वनिताचरितं मतं दुरवबोधमतः ॥ १७ ॥
उपगूहतः प्रियतमस्य दृढं प्रथमानवेपथुविहस्तभुजा ।
परिरम्भमग्रमणितं न वधूरशकद्विधातुमपरा सुरते ॥ १८ ॥
सुरतश्रमप्रभववारिलवप्रकरो रराज मिथुनस्य तनौ ।
निबिडोपगूहनवशेन दलन्मणिहारचूर्ण इव कीर्णकणः ॥ १९ ॥
अधरौष्ठदंशविकसद्वदनप्रविशत्प्रियादशनराजिरुचः ।
तरुणा विरेजुरमलं सुरते रसमापिबन्त इव मूर्तिधरम् ॥ २० ॥
स्थितिमर्पयत्कुचयुगं सुतनोः कमितुर्निपीडयदुरोऽपि समम् ।
समभूषयन्मणिगणः सुरते सममित्रशत्रुरथवा विमलः ॥ २१ ॥
नखलाञ्छनैर्विलिखितासु नृणां पुलकच्छलादविरलाः परितः ।
मदनाङ्कुराः सुरतकेलिजुषां जघनस्थलीषु सुदृशामुदगुः ॥ २२ ॥
अपनीयमानपरिधानपुटं स्फुटकान्तिचारु दयितोरुयुगम् ।
ददृशे प्रियेण हृतबाह्यदलं कदलीप्रकाण्डमनुकुर्वदलम् ॥ २३ ॥
रमणाग्रपाणिनिहिता निबिडं हृदि वाणिनी न मणितं विदधे ।
मनसि स्थितः प्रकटमट्टहसं कुरुते स्म किंतु मुदितो मदनः ॥ २४ ॥
निजजीवितेशकरजाग्रकृतक्षतपङ्क्तयः शुशुभिरे सुरते ।
कुपितस्मरप्रहितबाणगणव्रणजर्जरा इव सरोजदृशः ॥ २५ ॥
त्रपया प्रदीपमनयत्प्रशमं रमणी मिषान्तरवशेन नवा ।
यदि वा प्रकाशयति योऽपि रहः कृतिभिः कथं स निकटः क्रियते ॥ २६ ॥
मिथुनैर्मिथो वदनपानरसप्रतिपन्ननिद्रनयनाम्बुरुहैः ।
उपदेशतः स्मरगुरोरचिरादुपलभ्यते स खलु योगसुखम् ॥ २७ ॥
अतिदूरमुज्झितदुकूलयुगैरितरेतरं परिगृहीतकचैः ।
मिथुनैः स्मरग्रहनिवेशवशाद्विवशैरलज्जमुदमादि रतौ ॥ २८ ॥

१. 'वाणिनी नर्तकीमत्ताविदग्धवनितासु' इति मेदिनी.

अवलानितम्बवलये रभसादतिसान्द्रकण्टकसमाकुलिते ।
युवदृष्टिराहितपदा भ्रमितुं न शशाक नूनमपरत्र तनौ ॥ २९ ॥
परितुष्यति स्म चरणाभिहतो हृदि कोऽपि कोपपरया परया ।
अनुकूलता न परमेणदृशां प्रतिकूलतापि रतये नितराम् ॥ ३० ॥
प्रतिहन्यमानमपि हेतुशतैरिह वैभवं भवति भावि भृशम् ।
करपीडितं युवभिरेणदृशां स्तनमण्डलं श्रियमधादधिकाम् ॥ ३१ ॥
नयनाब्जचुम्बनमकारि मुदा दयितेन यन्मृगदृशो रहसि ।
परिलग्नकज्जलमलीमसया तदलक्ष्यताधरदलस्य रुचा ॥ ३२ ॥
श्रमवारिबिन्दुकणिकानिकरैर्दशनक्षतैर्नखपदैश्च नवैः ।
सुरताहवे विघटिताभरणस्तरुणीजनोऽधिकतरं शुशुभे ॥ ३३ ॥
अधरोष्ठखण्डनमुरोनिहतस्तनपीडनं च सुकुमारतनोः ।
तनुते स्म कर्म कठिनं तरुणः स्मरमोहिते क नु विवेकविधिः ॥ ३४ ॥
अधरं मुखेन नयनेन रुचिं सुरभित्वमाब्जमिव नासिकया ।
नववर्णिनीवदनचन्द्रमसस्तरुणा रसेन युगपन्निपपुः ॥ ३५ ॥
विरतौ रतस्य सहसोदितया त्रपया कुलेन निजमेतदिति ।
तरुणेन पङ्कजदृशा च जवाद्वसनं तदेव जगृहेऽञ्चलयोः (?) ॥ ३६ ॥
विविधप्रयोगसुभगं विकसन्मुखमुल्लसन्मवनखाङ्कपदम् ।
रतनाटकं प्रकटभावरसं निबिडाङ्गसंधि विदधे युवभिः ॥ ३७ ॥
चरणानतिप्रमुखचाटुशतैरपनीयमानमसमं सुतनोः ।
भुजयन्त्रपीडिततनोर्वदनादपिबद्रसं कमपि कोऽपि युवा ॥ ३८ ॥
नवयौवनानलकदुष्णवधूकुचलोष्टयुग्मदृढसंघटितम् ।
हृदयं स्फुटद्विरहवेदनया दयितस्य निर्वृतिमवाप जवात् ॥ ३९ ॥
सकलां निशामशयितैर्दयितैस्तरुणीजनस्य सविधे विदधे ।
वसनं मुदैकमपरं जघनाज्जगृहे च मोहनकुतूहलिभिः ॥ ४० ॥
शिरसैव मां वहति नित्यमियं कुरुते रतेष्वध इतीव तनोः ।
श्लथबन्धलक्ष्यकुसुमः समभूत्स विलक्ष्यहास इव केशचयः ॥ ४१ ॥

१. वासं वस्त्रं च.

पटमन्दिरेषु रजनीपवनः प्रविशन्प्रदीपमनयद्विरतिम् ।
हृदयेषु कामुकजनस्य पुनर्मदनानलं ज्वलयति स्म भृशम् ॥ ४२ ॥
अधरेषु पङ्कजदृशाममृतं वसतीति निश्चिनुमहे नितराम् ।
यदमीभिरुल्लसितमेव रतौ शतशो भुजंगदशनव्रणितैः ॥ ४३ ॥
युवभावकुम्भिविभुकुम्भरुचोस्तनयोरुपर्यतनुविस्तरयोः ।
सुदृशामराजततमामरुणा मदनाङ्कुशक्षततातिः सुरते ॥ ४४ ॥
अभ्युद्गते शशिनि मन्मथमूलमात्रे
पीत्वा मधूनि मधुराणि यथाभिलाषम् ।
लीलाविनीतवनितासुरतप्रसङ्गैः
क्षोणीभृतः क्षणमिव क्षणदामनैषुः ॥ ४५ ॥
दोलान्दोलनकेलिभिः प्रतिवनव्याकोशपुष्पोत्कर-
स्वीकारेण सरोजरेणुरुचिरे नीरे मुहुः क्रीडया ।
आपानोत्सवगीतिभिश्च सरसैः संसारसारैः सुखै-
रित्थं रैवतके वसन्तसमयस्तैः प्रेरितः पर्वते ॥ ४६ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये मधुपानसुरतवर्णनो नाम दशमः सर्गः ।

---

## एकादशः सर्गः ।

पृथ्वीनाथस्योग्रसेनस्य पुत्री पात्रं कान्तेः सार्धमन्तःपुरेण ।
तत्रायाता क्रीडितुं मासि चैत्रे नेत्रानन्दं नेमिनाथं ददर्श ॥ १ ॥
तं दृष्ट्वासौ भाग्यसौभाग्यवन्तं सूतश्लोकाख्यातवृत्तान्ववायम् ।
भिन्ना बाणैः पञ्चबाणस्य गाढं प्रत्यावृत्ता वेश्मलग्नग्रहेव ॥ २ ॥
शीतैः शीतैश्चन्दनाद्यैरुपायैर्दिग्धोद्दाहं[1] गाहमाना सुगात्री ।
सा निश्वासोत्कम्पिमुक्ताकलापा निद्रामुद्रां नोपलेभे निशायाम् ॥ ३ ॥
शून्यस्वान्ता सा वयस्यासु कान्ताः कुर्वाणासु प्रेमपूर्वाः प्रवृत्तीः ।
मूर्ध्नः कम्पेनोत्तरं तारनेत्रा चक्रे यद्वा चारुणा हुंकृतेन ॥ ४ ॥
नक्तं नक्तं चन्द्रसंदर्शनेन प्राणेष्वूर्ध्वप्रस्थितेषु प्रकामम् ।
वेगादागादक्षिणी मीलयन्ती मूर्छा तस्याः पक्ष्मलाक्ष्याः सखीव ॥ ५ ॥

---

१. उपचितापि उत्कृष्टमधिकं दाहं गाहमाना व्यश्नुवाना.

सा सर्वाङ्गं चन्दनेनोपलिप्त्वा निक्षिप्ताङ्गी पुष्पतूलीतलेषु ।
दाहोद्रेकादाकुलत्वं व्रजन्ती बाष्पम्लानाः स्वाः सखीरप्यकार्षीत् ॥ ६ ॥
स्मृत्वा स्मृत्वा नेमिमुद्गातुकामा कामोद्रेकाद्गाह्यविद्याप्रगल्भा ।
संकूजन्त्याः केवलं नो विपञ्च्याश्चक्रे बाला मूर्छनामात्मनोऽपि ॥ ७ ॥
चान्द्रं बिम्बं वृत्तवह्न्यारमकल्पं व्यालीवासीद्भीषणा पुष्पमाला ।
चित्याकल्पं पुष्पतल्पं च तस्यास्तस्मिन्नेवाबद्धसंबद्धबुद्धेः ॥ ८ ॥
इन्दोर्दीप्त्या दत्तदाहातिरेका यद्यच्छुभ्रं तत्र तत्रापरक्ता ।
सा कर्पूरं दन्तजं कर्णपूरं हारं हासं चेति सर्वं व्यहासीत् ॥ ९ ॥
नेमेर्बाल्यातिक्रमात्कामरम्यां दृष्ट्वावस्थां कारयिष्यन्विवाहम् ।
रूपख्यातां याचितुं यादवेशस्तामेवाथ प्राहिणोच्चक्रपाणिम् ॥ १० ॥
लब्धादेशः केशवः सद्य एव खेनोन्माद्यत्केतुना स्यन्दनेन ।
रम्यं हर्म्यैरुग्रसेनस्य राज्ञः स्कन्धावारं प्रापदप्राप्तखेदः ॥ ११ ॥
आदावैन्द्रं पत्तनं कुर्वतेव प्रासाभ्यासोत्कृष्टशिल्पक्रियेण ।
सर्वाकारं सारसारैः प्रकारैर्धात्रा धात्र्यां निर्मितं विस्तरेण ॥ १२ ॥
नो वर्णानां संकरो यत्र चित्रादन्यत्रासीत्सौधभित्तिप्रतिष्ठात् ।
नो वा बन्धः कामिनां केशपाशान्मुक्त्वा रत्याकर्षणेन प्रकीर्णान् ॥ १३ ॥
प्रासादानामेभिरुच्चैः शिरोभिर्नो मार्गस्ते स्यन्दनस्यात्र मागाः ।
यत्र श्रेणिः किङ्किणीनां क्वणन्ती प्रत्याख्यातीवार्कसूतं ध्वजस्था ॥ १४ ॥
यस्मिन्वेलद्वैजयन्ती लताभ्यस्त्रस्यद्वाहस्यन्दनोन्माथशङ्की ।
शङ्के त्यक्त्वा मार्गमर्कः कदाचिद्गच्छत्याशां दक्षिणामुत्तरां वा ॥ १५ ॥
नक्तं नक्तं सक्तनक्षत्रमालं वृत्तं रेजे यत्र वप्रं विशालम् ।
भास्वन्मुक्तामण्डलेनेव बद्धप्रान्तं कान्तं कुण्डलं भूतधात्र्याः ॥ १६ ॥
धाम्नो धाम्नः श्रीमतां द्वारि रम्भाः सुभ्रूः का नो मञ्जुघोषा सुकेशी ।
यत्रान्यैव श्रीः प्रभूताप्सरोभिः स्वर्गः साम्यं तस्य किंचित्प्रपेदे ॥ १७ ॥
यत्र स्त्रीणां मध्यदेशे वलीभिर्लावण्याम्भोनिम्नगाभिः पवित्रे ।
कृत्वा नाभीकन्दरायां तपांसि प्रायः कामोऽभूद्विजेता त्रिलोक्याः ॥ १८ ॥

प्राकारोऽन्तर्दीर्घिकायाः सुदीर्घः स्वच्छः स्वच्छे वारि संक्रान्तमूर्तिः।
यत्र स्कन्धारूढसूर्योपतापाद्बद्धारम्भो मज्जनायेव रेजे ॥ १९ ॥

नृत्यं यत्रात्यन्तकान्तं वितेनुर्लीलोद्यानस्थायिनः केकिनोऽपि।
यत्र श्रीमन्मन्दिरे पञ्जरस्थाः पेठुः कीराश्चापि कां कां न विद्याम्॥२०॥

रेजुर्देवागारशृङ्गेषु यत्र न्यस्ताः कुम्भाः प्रोल्लसच्छातकुम्भाः।
ध्वान्ते नक्तं प्रेङ्खतां खेचराणामुद्द्योतार्थं व्योम्नि दीपा इवोच्चैः ॥२१॥

लक्ष्मीवद्भिः स्वर्णकुम्भैर्निखातैराभाति स्म क्ष्मातलं केवलं नो।
प्रासादानामुन्नतानां नितान्तं प्रान्तप्रोतैर्यत्र तारापथोऽपि ॥ २२ ॥

मज्जन्तीनां योषितामङ्गरागैर्यत्राजस्रं वासितास्वम्बुजानि।
कर्पूरश्रीखण्डकस्तूरिकाणां गन्धं क्रीडादीर्घिकासूद्गिरन्ति ॥ २३ ॥

रम्यारामस्थायिनीनां लतानामासाद्येवासक्तिमश्रान्तमेव।
पुष्पोन्मर्दामोदसंस्कारहारी यस्मिन्मन्दः सर्वथाभूत्समीरः ॥ २४ ॥

तर्केष्वेवाश्रावि नाम [१]च्छलानां पक्षिष्वेवोच्चाटनं यत्र सुस्थे।
यस्मिन्मुक्त्वा शब्दविद्यां विकारो नो वर्णानां नैव नाशोऽपि जातः॥२५॥

पौरस्त्रीभिश्चन्द्रशालागवाक्षप्रक्षिप्ताक्षिप्रान्तलक्ष्यीकृताङ्गः।
द्वारोपान्ताबद्धगन्धद्विपेन्द्रं स प्रासादं भूपतेराससाद ॥ २६ ॥

[२]रक्षालक्ष्यं प्रोल्लसन्नी[३]लकण्ठं प्राप्तं शोभां चारुचन्द्रोदयेन।
आबिभ्राणं पार्वतीमुन्नतिं च प्रान्तप्रेङ्खद्व्योमसिन्धुं यथेशम् ॥ २७ ॥

शौर्यौदार्यैश्वर्यधुर्यान्नरेन्द्रश्लोकान्द्वारे बन्दिवृन्दैरधीतान्।
विस्तीर्णत्वादुत्थितेनैव कामं प्रत्यारावेणोच्चकैरुच्चरन्तम् ॥ २८ ॥

कर्तुं सेवामङ्गणे संगतानां सामन्तानामातपत्रैः प्रफुल्लैः।
पद्माकारैः पद्मवासाविलासस्थानच्छायामाश्रयन्तं समन्तात् ॥ २९ ॥

---

१. 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः।' 'अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं छलम्।' इति तार्किकाणां मतम्. २. रक्षणेन पालनेन च. ३. नीलः कण्ठः, नीलकण्ठो मयूरश्च.

भूभृत्कान्ताकेशसंस्कारधूमस्तोमश्यामैरिन्द्रनीलांशुजालैः ।
जालोद्गीर्णैः शृङ्गलग्नाम्बुवाहच्छेदभ्रान्तिं भावयन्तं जनस्य ॥ ३० ॥
दानाम्भोभिर्यामसामोद्भवानां भूयोभूयः संभृतास्तोकपङ्कम् ।
शश्वल्लीलासंचरद्वारनारीमञ्जीराणां झांकृतैः क्लृप्तशोभम् ॥ ३१ ॥
धुर्यैरश्वैर्हेषमाणैः सहर्षं पूर्वाख्यातं द्वारपालैरिवाथ ।
अभ्युत्तस्थौ स्यन्दनादुत्तरन्तं हन्तारं तं दानवानां नरेन्द्रः ॥ ३२ ॥
भूषारत्नश्रेणिरश्मिप्ररोहैर्दूराकृष्टौ स्नेहसूत्रैरिवैतौ ।
स्वैस्तेजोभिः पर्वणीव स्फुरन्तौ चन्द्रादित्यौ गाढमाश्लिष्यतः स्म॥३३॥
व्याघातेन क्रूरयोर्भूमिभर्ता बाह्वोर्मध्ये माधवस्योग्रसेनः ।
पाथोराशेर्मन्थने मन्दराद्रिर्मन्थीभूतः प्रांशुराभासतेव ॥ ३४ ॥
हर्षादग्रे गच्छता तेन राज्ञा निर्दिष्टाध्वा साधुसंपादितार्घः ।
स्थानस्थानस्थापितस्वर्णकुम्भं भक्तिप्रीतः प्राविशद्वेश्म विष्णुः ॥३५॥
कृष्णाक्रान्तस्यासनस्योपकण्ठे पीठं हैमं भूमिपालो विशालम् ।
प्रत्यासन्नप्रस्थलीनाम्बुवाहं मेरोः शृङ्गं केशरीवारुरोह ॥ ३६ ॥
विष्णोर्दृप्तानेकदैत्यस्य जिष्णोर्दृष्ट्वाकस्मादागमं विस्मितात्मः ।
मन्द्रध्वानः स्वागतप्रश्नपूर्वं पृथ्वीनाथः सोऽथ वक्तुं प्रवृत्तः ॥ ३७ ॥
निर्णीतं प्राग्जन्मनि स्वस्य पुण्यं लब्धाः सर्वेऽप्युत्सवास्तुल्यकालम् ।
यत्त्वं प्राप्तः पुण्डरीकाक्ष साक्षादातिथ्यं मे धाम्नि धाम्नामिवेशः ॥३८॥
युष्मत्पादक्षोदपातेन पूतं संजातं मे मन्दिरं तीर्थमद्य ।
अद्यात्मानं मान्य मन्ये प्रमोदादध्यासीनं सत्यमैन्द्रीमवस्थाम् ॥ ३९ ॥
अद्य श्रीमानद्य राजाहमेव क्षत्रश्रेणीमाननीयोऽहमद्य ।
साफल्यं मे संप्रति प्राप्तवन्तः कंसाराते धर्मकर्मानुबन्धाः ॥ ४० ॥
कंसादीनां दानवानां विनाशाद्दत्तं लोकस्याभयं हि त्वयैव ।
लक्ष्म्याः प्राणाधीश्वरस्त्वं तवात्तः कार्यं नान्यापेक्ष्यमीक्षे तथापि ॥४१॥
अत्राकस्मादागमस्ते महान्तं हेतुं किं(कं)चिद्व्यक्त्यवन्ध्यप्रवृत्तेः ।
भूयोऽल्पं वा नह्यनुद्दिश्य कार्यं कुर्यात्कुत्रापि प्रवृत्तिं सचेताः ॥ ४२ ॥
(युग्मम्)

स्नेहादित्थं भाषमाणं मनीषी दैत्यद्वेषी तोषपोषं दधानः।
पृथ्वीनाथं प्रत्यवोचद्विसर्पद्दन्तज्योतिर्द्योतितास्थानगर्भः॥ ४३ ॥

वंशो यस्याशेषवंशावतंसः शुद्धा बुद्धिर्यस्य यस्यास्ति शक्तिः।
यस्यौदार्यं यस्य धैर्यं स एव प्रायो भूपः प्रश्रयेणाभिधत्ते॥ ४४ ॥

जल्पत्यङ्गैः सप्तभिः शोभमाना साम्राज्यश्रीस्तावकीनं विवेकम्।
अन्तःसंस्थं वारणेन्द्रस्य दानोद्रेकं वृष्टिः स्पष्टयत्येव रक्ता॥ ४५ ॥

अप्युद्दामाम्नो गुणानात्मनिस्थान्स्तौत्यल्पानप्यन्यसंस्थान्महात्मा।
यद्वास्त्येवानादरः संनिवासे दूरीभावो वस्तुनि प्रीतिहेतुः॥ ४६ ॥

लक्ष्मीवन्तं क्षत्रधर्माधिराजं जातं वंशे रोहिणीवल्लभस्य।
संबन्धार्हं त्वामवेत्य प्रतीतः प्रत्याहेदं यादवेन्द्रो गुरुर्मे॥ ४७ ॥

नेमेरस्मन्नन्दनस्यानुरूपा रूपेणातिख्यातिमासेदुषी स्वा।
उद्वाहार्थं दीयतां भूप धन्या कन्या नाम्ना यास्ति राजीमतीति॥४८॥

बिभ्रद्भूपः श्रीकलापं समन्तादानन्दाम्भःपूरपात्रे च नेत्रे।
कृष्णस्येत्थं जल्पमाकर्ण्य मन्द्रानादं मेघस्येव बर्ही बभाषे॥ ४९ ॥

संसारेऽस्मिन्नामनन्ति प्रबुद्धाः कन्यादानं सर्वदानप्रधानम्।
तच्चेत्पात्रे न्यस्यते निर्विकल्पं सिद्धौ दातुः कीर्तिधर्मौ महार्थौ॥ ५० ॥

तत्रास्माकं कोऽपि पुण्योदयोऽयं संप्रत्याविर्भावमङ्गीचकार।
यद्यत्नानां प्रार्थनीयं सहस्रैस्तस्यावाप्तिर्येन जाता स्वतोऽसौ॥ ५१ ॥

नानावीरोत्पत्तिलब्धप्रशंसे वंशे तावज्जन्म रम्यं च रूपम्।
शीलं विश्वप्राणिलोकानुकूलं किं तन्नेमेर्यन्न संबन्धहेतुः॥ ५२ ॥

त्वं संप्राप्तोऽस्मद्गृहानर्हणीयो देहं दारान्वैभवं वा गृहाण।
यच्चावश्यं देयमेवास्य दानाच्चित्तं नैतत्कृष्ण तृप्तिं बिभर्ति॥ ५३ ॥

राजीमती निजमनोरथमार्गवर्ति
　श्रुत्वा वचः पितुरुपान्तगता तदानीम्।
हर्षप्रकर्षजलशालिविशालनेत्रं
　व्रीडावशादवनतं कुरुते स वक्त्रम्॥ ५४ ॥

संतानवानपि सुगात्रि कृतोऽहमद्य
पुत्रि त्वयैव गृहमेधिषु माननीयः ।
त्वत्प्रार्थनार्थमिह यज्जगदेकवीरो
नारायणः स्वयमयं मदगारमागात् ॥ ९५ ॥

आभाषणादित्युपजातलज्जां सुतां प्रतिश्रुत्य नयश्रुतज्ञः ।
विवाहलग्नार्हमुहूर्तमेकं निर्णीय जिष्णुर्विससर्ज कृष्णम् ॥ ९६ ॥

कृष्णः संबन्धिना तेन ग्राहिताभिनवांशुकः ।
समुद्रविजयस्येमं सिद्धमर्थं न्यवेदयत् ॥ ९७ ॥

समुद्रविजयस्ततस्तनययोग्यरूपां वधूं
सुतोचितमवाप्य तं वरमथोग्रसेनोऽपि च ।
उभौ प्रमदनिर्भरौ परिणयोत्सवप्रक्रमे
विधेयविधिविस्तरं विभववासवौ चक्रतुः ॥ ९८ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये राजीमतीप्रार्थनो नामैकादशः सर्गः ।

---

## द्वादशः सर्गः ।

विवाहार्थं प्रतिष्ठासुरुग्रसेनपुरीं प्रति ।
अङ्गीचकार नेपथ्यं नेमिनाथो यथाविधि ॥ १ ॥

प्रतिबिम्बितनिःशेषपदार्थनिवहः प्रभोः ।
हृदये निर्मलस्तस्य हारो भाव इवाबभौ ॥ २ ॥

नेमेः कङ्कणरत्नौघप्रभापल्लविताविव ।
ऊहतुः कामपि च्छायामर्थिकल्पद्रुमौ भुजौ ॥ ३ ॥

रत्नकुण्डलयोः कान्तिः कर्णान्तिकचरी बभौ ।
स्तुतिरैन्द्रीव सद्भक्तिर्नानावर्णविराजिनी ॥ ४ ॥

निस्तलस्तिलको नासावंशस्योपरि चान्दनः ।
कुमारवदनाम्भोजश्रियश्छत्रतुलामधात् ॥ ५ ॥

गतत्रासादिदोषस्य लोकचूडामणेः स्वयम् ।
मण्डनस्थितिरित्यस्य चूडायां निहितो मणिः ॥ ६ ॥

[1]अङ्गदाद्यैर्वृतो रामः स[2]सुग्रीवो महाभुजः ।
[3]समुद्रविजयाह्लादी स प्रियासिक्षमोऽभवत् ॥ ७ ॥

अङ्गरागः कुमारस्य स्वच्छोऽपि कुशलैः कृतः ।
कासां न योषितां सान्द्रं मनोरागमवर्धयत् ॥ ८ ॥

स शुभ्रे वाससी बिभ्रद्बभासे श्यामविग्रहः ।
अञ्जनाद्रिरिवोपान्तविश्रान्तशरदम्बुदः ॥ ९ ॥

परसंतापविच्छित्तिहेतुं सद्वृत्तमुज्ज्वलम् ।
अथो विभूषयामास तं सितातपवारणम् ॥ १० ॥

रेजतुश्चामरे चन्द्रचारुणी तस्य पार्श्वतः ।
निर्मले धर्मयशसी सदा संनिहिते इव ॥ ११ ॥

विवाहमहमाङ्गल्यक्रियाः काश्चिद्यथाक्रमम् ।
प्राप्तो वृद्धाजनश्चक्रे तस्याशीर्मुखराननः ॥ १२ ॥

अथारुह्य रथं नेमिर्मनोरथमिवोन्नतम् ।
प्रतस्थे मङ्गलातोद्यनादैराहूतभूपतिः ॥ १३ ॥

आलोकितजरासन्धबलस्तम्भादिकं यशः ।
गायन्ति स्म कुमारस्य सुकुमारगिराङ्गनाः ॥ १४ ॥

क्षितौ खुरपुटातोद्यनादं विदधतः पुरः ।
चित्रचङ्क्रमणव्याजाद्वाजिनो ननृतुः स्वयम् ॥ १५ ॥

दन्तप्रणालैरुल्लासिकुम्भैः करिभिरग्रगैः ।
अलक्ष्यत पुरीवास्य स्नेहात्प्रचलिता गृहैः ॥ १६ ॥

वातायनादिरूढास्तं लाजैः पुरपुरन्ध्रयः ।
कटाक्षैश्च परिक्षिप्तैः सममेवार्चयन्मुदा ॥ १७ ॥

शुभ्रैर्नभसि नीरन्ध्रैश्छत्रैश्चन्द्रोदये कृते ।
किमाश्चर्यमिदं लोकैर्नालोक्यत यदंशुमान् ॥ १८ ॥

---

१. अङ्गदो वालिपुत्रः, केयूरं चात्राङ्गदम्. २. सुग्रीवाख्यवानरेण शोभनग्रीवया च
३. समुद्रस्य विजयेनाह्लादो यस्य, समुद्रविजयनामानं पितरमाह्लादयतीति.

रजो मदजलासारैर्वारयन्तः समुच्छलेत् ।
सह प्रस्थायिनो ज्ञाताः सत्यार्थास्तस्य वारणाः ॥ १९ ॥
अनूनया विभूत्यासौ भासमानो महामनाः ।
सहस्रनेत्रलब्धेः प्राक्पुरहूत इवारुचत् ॥ २० ॥
स्तुतिकोलाहलैः पश्चाद्वन्दिवृन्दानि सुन्दरैः ।
नेमिः प्रथममेवाशास्तेषां दानैरपूरयत् ॥ २१ ॥
स्थानस्थानकृतोद्दामहेममङ्गलतोरणम् ।
राजमार्गं शनैः क्रामन्निश्चक्राम पुरादसौ ॥ २२ ॥
पुरोगैरनुगैः स्फारा विशिखान्तःकृशा चमूः ।
साल्पमध्याङ्गनेवासीद्विशालजघनस्तनी ॥ २३ ॥
अनुकूलमरुद्वेल्लद्वैजयन्तीकरैर्मुहुः ।
तमाह्वदिव सप्रेमा गच्छन्तं द्वारकापुरी ॥ २४ ॥
ददर्श सागरं नेमिः स्फुरत्कङ्कणशालिना ।
ऊर्मिहस्तेन कुर्वन्तं सरिद्वीचिकरग्रहम् ॥ २५ ॥
समेतबन्धुवर्गस्य वरस्यास्य प्रसर्पतः ।
संबन्धिनः पुरे वार्ता सह तूर्यरवैरगात् ॥ २६ ॥
अथोग्रसेनो नृपतिरत्यन्तप्रीतमानसः ।
स विशेषोत्सवामात्मराजधानीमकारयत् ॥ २७ ॥
तत्र राजपथाः कामं सिक्ताः कुङ्कुमवारिणा ।
कलधौतशिलाबद्धभूतला इव रेजिरे ॥ २८ ॥
चेरुस्तत्र न नीरन्ध्रध्वजच्छायेषु वर्त्मसु ।
आपातिसैन्यसंमर्दभीता इव रुचो रवेः ॥ २९ ॥
स्वर्णतोरणरत्नानां रश्मिभिर्गगनोन्मुखैः ।
रोमाञ्चितेव सा रेजे राजधानी प्रमोदतः ॥ ३० ॥
गन्धवारिभिराक्रान्तं तत्र यावद्भुवो रजः ।
पुष्पप्रकरसंभूतं तावदन्यदजायत ॥ ३१ ॥

---

१. 'रथ्या प्रतोली विशिखा' इत्यमरः.

पौरैरेवोग्रसेनस्य मोत्सवव्याकुलात्मभिः।
भक्तिवैचित्र्यमेतस्यां दर्शितं मन्दिरैरपि ॥ ३२ ॥
मङ्गलस्नाननैर्मल्यभाजं राजीमतीमथ।
साधु प्रसाधयामास कुलवृद्धो वधूजनः ॥ ३३ ॥
शरीरकान्तिसंतानविभ्रमं बिभ्रती नवे।
वसाना वाससी स्वच्छे सा चकाशे सुवासिनी ॥ ३४ ॥
अशोभत शुभे तस्याश्चान्दनस्तिलको मुखे।
प्ररूढ इव चन्द्रान्तश्चन्द्रमाश्चारुमण्डलः ॥ ३५ ॥
तस्याः स्थितिमुरोदेशे लब्ध्वा हृदयहारिणि।
हारो मुक्तामयः काममनन्दरुचितामगात् ॥ ३६ ॥
अञ्जनं मलिनच्छायं तस्याः स्वच्छे विलोचने।
सौभाग्यसिद्धिजनकस्तेषां योगस्तथाप्यभूत् ॥ ३७ ॥
रत्नकेयूरनिष्ठ्यूतैः प्रभूतैः कान्तिवारिभिः।
जातं बाहुलतामूलं तस्याः प्रोल्लासि सर्वतः ॥ ३८ ॥
सुमुखी शुभ्रवसना विरेजे रत्नभूषणैः।
संपूर्णसोमनक्षत्रैः शारदी क्षणदेव सा ॥ ३९ ॥
विवाहमहकर्तव्यं प्रगुणय्य गुणी नृपः।
आहूत इव तत्तूर्यैर्वरस्याभिमुखं ययौ ॥ ४० ॥
नव्याभ्ररूपैः करिभिः सगन्धर्वगणैर्वृतः।
उग्रसेनः सहस्राक्ष इव साक्षादलक्ष्यत ॥ ४१ ॥
महीरेणुमहातोद्यनादकेतूष्णवारणैः।
आविर्भूतं मिथस्तत्र वर्गयोरुभयोः क्रमात् ॥ ४२ ॥
ततो वरवधूवर्गौ वीक्षितान्योन्यवैभवौ।
समृद्धिगर्वमुत्सृज्य संबन्धिमदमीयतुः ॥ ४३ ॥
अथ कूजद्रथाङ्गौ तौ पुण्डरीकौघमण्डितौ।
संगमं जग्मतुः पक्षौ प्रवाहौ सैन्धवाविव ॥ ४४ ॥

---

१. 'रथाङ्गं न द्वयोश्चक्रे ना चक्राह्वविहंगमे.' २. 'पुण्डरीकसिताम्भोजे सितच्छत्रे च.'

वरश्वशुरयोरासीदथ श्लेपस्तयोः पथि ।
अर्थयोरिव सत्काव्ये विदग्धोक्त्या प्रतीतयोः ॥ ४५ ॥
प्रसारितभुजापक्षा बृहत्कटकशालिनः[1] ।
यथा क्रममथाश्लिप्यन्नपरेऽपि महीभृतः[2] ॥ ४६ ॥
न केवलं स्फुरत्कान्तिचक्राः संबन्धियोषितः ।
मुक्तालताश्च संश्लिष्टाः पृथग्भावं चिरादगुः ॥ ४७ ॥
अथाग्रगामिना भूमिस्वामिना सह तत्क्षणम् ।
प्रविवेश पुरं नेमिरात्मेव निजकर्मणा ॥ ४८ ॥
जगत्त्रयवरस्यास्य वरस्यालोकहेतवे ।
जवान्नगरनारीभिरध्यासे सौधमूर्धसु ॥ ४९ ॥
नितम्बः किङ्किणीनादैर्मध्यभङ्गभयादिव ।
गुरुर्न्यवारयद्बालाश्चलन्तीरतिरंहसा ॥ ५० ॥
अञ्जनीकृत्य कस्तूरीं कुङ्कुमीकृत्य यावकम् ।
काचिन्निर्मितनेपथ्या सखीनां हास्यतामगात् ॥ ५१ ॥
उत्सुका निर्निचोलैव काप्यालोकपथं गता ।
कुमारदर्शनाल्लेभे सद्यो रोमाञ्चकञ्चुकम् ॥ ५२ ॥
अन्तर्धायाङ्गमङ्गेन स्थितौत्सुक्यादकञ्चुका ।
मुखद्विर्भावमन्यस्याश्चक्रे स्कन्धाहितानना ॥ ५३ ॥
स्नानोत्तीर्णाग्रसौधस्था हस्तन्यस्तकचावलिः ।
कामशासनदेवीव धृतासिः काचिदावभौ ॥ ५४ ॥
पाणिपल्लवविन्यस्तं वहती(न्ती) कापि दर्पणम् ।
तथैव वक्रसीमन्ता गवाक्षे दृष्टिमक्षिपत् ॥ ५५ ॥
अक्षाणि प्राप्य कारीणि यन्नेमिनिहितेक्षणाः ।
रोमाञ्चशिथिलं वासो ददृशुर्न मृगीदृशः ॥ ५६ ॥
जृम्भाविकासिनास्येन भ्रूलतातोरणश्रिया ।
पुरप्रवेशाभिमुखं काचित्काममसूचयत् ॥ ५७ ॥

---

१. 'कटकस्त्वद्रिनितम्बे वाहुभूपणे । सेनायाम्.' २. राजानः, पर्वताश्च.

गवाक्षलक्ष्यैः पौरीणां मुखैः संपूर्णमण्डलैः ।
व्याप्ताश्चन्द्रैरिवान्वर्थाश्चन्द्रशालास्तदाभवन् ॥ ५८ ॥

कस्याश्चन चला दृष्टिर्जालान्तरविनिर्गता ।
शफरीव ममज्जान्तर्नेमिलावण्यवारिधेः ॥ ५९ ॥

चमत्कृताः कुमारस्य रूपमालोक्य सुभ्रुवः ।
शिरांसि दुधुवुः सद्यः स्मरबाणैरिवाहताः ॥ ६० ॥

तस्य वक्षसि विस्तीर्णे भ्रान्त्वा कामं नतभ्रुवाम् ।
श्रान्ता इव दृशोऽभूवन्न व्यावृत्तिक्षमाः पुनः ॥ ६१ ॥

[1]अङ्गभङ्गं सरोमाञ्चं विकाशं नेत्रपद्मयोः ।
रसाधिक्यजुषां तासां चकार मदनज्वरः ॥ ६२ ॥

मुक्तार्धलिखितं चि[2]त्रं कापि जालार्पितेक्षणा ।
कुमारचारुतां वीक्ष्य पूर्णचित्राभवद्वधूः ॥ ६३ ॥

समग्रगुणसंपन्नं नेमिमासाद्य नायकम् ।
राजीमत्याः स्फुटं जातं संप्रति प्राक्तनं तपः ॥ ६४ ॥

शार्ङ्गमारोपितं येन हस्तेनैकेन हेलया ।
वायुभिर्नासिकामुक्तैः पाञ्चजन्यश्च पूरितः ॥ ६५ ॥

जरासंधस्य सा सेना तरोश्छायेव भास्करात् ।
स्वयं पराङ्मुखी यस्मादभूदद्भुततेजसः ॥ ६६ ॥

यत्र गर्भे गते धाम्नि रत्नवृष्टिः किलाभवत् ।
यस्य जन्मोत्सवे सेन्द्राः किलाजग्मुः सुधाभुजः ॥ ६७ ॥

सोऽयं सखिवरो नेमिर्नीलोत्पलदलद्युतिः ।
अधः श्वेतातपत्रस्य मध्ये चामरयोर्द्वयोः ॥ ६८ ॥

इत्थं पुरपुरन्ध्रीणां शृण्वन्नन्योन्यसंकथाः ।
नेमिः समासदत्सद्म द्वारं संबन्धिनः शनैः ॥ ६९ ॥

---

१. अङ्गभङ्गादीनि ज्वरस्य लक्षणानि । रसाधिक्यसेवनं कारणम्. २. 'कर्बुराद्भुतयोः क्लीबं तिलकालेख्ययोरपि'.

दूर्वाक्षतैर्मलयजेन घनेन दध्ना
विभ्राजितं कनकभाजनमाददाना ।
तत्रोग्रसेननृपतेर्दयिता वरस्य
कर्तुं विवाहमहमङ्गलमग्रतोऽभूत् ॥ ७० ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये वरागमनो नाम द्वादशः सर्गः ।

---

त्रयोदशः सर्गः ।

अथो रथाद्यावदियेष नेमिस्तत्रोत्तरीतुं तरुणार्कतेजसा ।
शुश्राव तावत्स विवाहयज्ञे बद्धस्य शब्दं पशुसंचयस्य ॥ १ ॥
श्रुत्वा तमार्तध्वनिमेकवीरः स्फारं दिगन्तेषु स दत्तदृष्टिः ।
ददर्श वाटं निकटे निषण्णः खिन्नाखिलश्वापदवर्गगर्भम् ॥ २ ॥
तं वीक्ष्य पप्रच्छ कृती कुमारः स्वसारथिं मन्मथसारमूर्तिः ।
किमर्थमेते युगपन्निबद्धाः पाशैः प्रभूताः पशवो रटन्तः ॥ ३ ॥
श्रीमन्विवाहे भवतः समन्तादभ्यागतस्य स्वजनस्य भुक्त्यै ।
करिष्यते पाकविधेर्विशेष एषां वसाभिः स तमित्युवाच ॥ ४ ॥
श्रुत्वा वचस्तस्य स वश्यवृत्तिः स्फुरत्कृपान्तःकरणः कुमारः ।
निवारयामास विवाहकर्माण्यधर्मभीरुः स्मृतपूर्वजन्मा ॥ ५ ॥
अनुत्तरत्यत्र रथान्निषिद्धनिःशेषवैवाहिकसंविधाने ।
सविस्मयः किं किमिति ब्रुवाणः समाकुलोऽभूदथ बन्धुवर्गः ॥ ६ ॥
उत्तीर्यते किं न पताकिनोऽस्मान्माङ्गल्यमेतच्च निषिध्यते किम् ।
इत्युग्रसेनादिषु भाषमाणेष्वभाषत व्यक्तमिदं कुमारः ॥ ७ ॥
परिग्रहं नाहमिमं करिष्ये सत्यं यतिष्ये परमार्थसिद्ध्यै ।
विभोगलीलामृगतृष्णिकासु प्रवर्तते कः खलु सद्विवेकः ॥ ८ ॥
विभोगसारङ्गहृतो हि जन्तुः परां भुवं कामपि गाहमानः ।
हिंसानृतस्तेयमहावनान्तर्वम्भ्राम्यते रेचितसाधुमार्गः ॥ ९ ॥
आत्मा प्रकृत्या परमोत्तमोऽयं हिंसां भजन्कोपनिषादकान्ताम् ।
धिक्कारभाग्नो लभते कदाचिदसंशयं दिव्यपुरप्रवेशम् ॥ १० ॥

दानं तपो वा वृषवृक्षमूलं श्रद्धानतो येन विवर्ध्य दूरम् ।
खनन्ति मूढाः स्वयमेव हिंसाकुशीलतास्वीकरणेन सद्यः ॥ ११ ॥
असाधु तत्सर्वमहो हिनस्ति क्रियेति कर्मा विबुधैर्यदूचे ।
अस्यां हि सत्यां स्फुटमेव कर्माण्यष्टौ लभन्तेऽभ्युदयं जगत्सु ॥ १२ ॥
हिंसाविमानं जनयन्ति जन्तोः कस्यापि ये कर्ममनोवचोभिः ।
तत्राधिरूढाः खलु तत्क्षणेन प्रयान्त्यधोधो नरकान्तरेषु ॥ १३ ॥
यः प्राणिनां जानु[1] वधं विधत्ते स्वप्नेऽपि यस्तं न समीहते च ।
स सर्वतः सद्गुणजालयोगी भवान्तरे धीवरतां प्रयाति ॥ १४ ॥
निःशेषदुःखोदयमूलमन्त्रं यो देहपुष्ट्यै वधमादधाति ।
नूनं स शीतार्तिभिदे दुरात्मा प्रवेशमग्नौ ज्वलिते करोति ॥ १५ ॥
मा भून्नराणां नरके निपातशङ्का तमःकश्मलमानसानाम् ।
शूकान्न किं भक्षयतां शरीरं पुरीषपाकस्थितिभाण्डभूतम् ॥ १६ ॥
ये नाम हिंसां परलोकसिद्ध्यै प्रकल्पयन्ते विधिवत्प्रयुक्ताम् ।
दानं प्रतिद्वन्द्विदया च तस्याः किं नोच्यते तैर्नरकाप्तिहेतुः ॥ १७ ॥
तनोतु जन्तुः शतशस्तपांसि ददातु दानानि निरन्तराणि ।
करोति चेत्प्राणिवधेऽभिलाषं व्यर्थानि सर्वाण्यपि तानि तस्य ॥ १८ ॥
वधं विधत्ते यदि जातु जन्तुरलं तपोदानविधानयत्नैः ।
तमेव चेन्नाद्रियते कदाचिदलं तपोदानविधानयत्नैः ॥ १९ ॥
वह्न्यभिव्यञ्जयितुं प्रगल्भा भावान्तराणि[2] प्रथितानुरागा ।
दूतीव हिंसा सहसा नराणां संपद्यते दुर्गति[3]संगमाय ॥ २० ॥
कृपा सुधेवात्ममहाम्बुराशौ हिंसा सुरेव द्वयमभ्युदेति ।
एका नराणाममरत्वहेतुरन्या तु मूर्छां पतनाय दत्ते ॥ २१ ॥
कन्यामिवासाधुवरप्रदानाद्यः स्वां गिरं दूषयति व्यलीकात् ।
इहायशस्तस्य विगर्हणीयमनर्हणीयाश्च परेऽस्य लोकाः ॥ २२ ॥

---

१. 'जातु' इति भवेत्. २. 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु ॥ रत्नादौ च.' ३. निरयः, निःस्वता च.

चौर्येण यत्प्राणभृतां परत्र दुःखं तदावेदितमप्रमेयम् ।
प्रत्यक्षमेवैहिकमस्ति सर्वं शूलाधिरोपप्रमुखं जनस्य ॥ २३ ॥
तस्मादयं भोगपथो न पथ्यः प्रेक्षावतामिन्द्रियदस्युदुष्टः ।
अनेन जन्तुर्विचरन्ननन्तदुःखाटवीपर्यटनं करोति ॥ २४ ॥
सेव्यः सतां तत्खलु धर्ममार्गः स्वर्गाय यः प्राञ्जल एव याति ।
आकर्णयध्वं यदि कौतुकं वो ममैव जन्मान्तरधर्मशक्तिम् ॥ २५ ॥
विन्ध्यो गिरिस्तिष्ठति भारतेऽस्मिन्वनान्तपुष्पायिततारकौघः ।
दिग्वारणानां रणवारणार्थमिव स्थितो यः प्रतिभाति मध्ये ॥ २६ ॥
वज्राभिघातावसरे गिरीणां प्रदत्तकुक्षिस्थिति(मन्मृग)वर्गमांसैः ।
गुहागृहेष्वस्य वसामि पूर्वमज्ञातशीतातपवृत्तिकष्टः ॥ २७ ॥
मयूरबर्हैः कृतकेशबन्धः सबाणबाणासनवामपाणिः ।
सोऽहं कदाचिद्द्रुतकृष्णसारपृष्ठानुसारी दिवसं नयामि ॥ २८ ॥
पदप्रतिच्छन्दविलोकनेन क्वचिन्मदामोदवनानिलेन ।
विभाविताध्वा गहनान्तरेषु भ्रमामि सामोद्भवमांसलुब्धः ॥ २९ ॥
फलेषु सुस्वादतमेषु सत्सु क्रव्यार्थिनं मां मृगपृष्ठलग्नम् ।
जाने तदानीं स्मितपुष्पगुच्छच्छलादहासीद्वनवृक्षवीथी ॥ ३० ॥
अन्येद्युरुद्दामतमालमाले कूले क्वचिन्मेकलकन्यकायाः ।
स्थितः समं वागुरया सहर्षमश्रौषमस्तद्रुमपत्रशब्दम् ॥ ३१ ॥
श्रुत्वा च तं मर्मरमात्तधन्वा समापतच्छ्वापदशङ्कयाहम् ।
यावद्विमुञ्चामि शरं रुषान्धस्तावत्प्रिया मे पुरतोऽवतस्थे ॥ ३२ ॥
उवाच सा मां प्रिय मुञ्च चापमेतौ मुनी मान्यतमौ न वध्यौ ।
मया क्रयार्थं नगरे व्रजन्त्या दृष्टौ नृपेणापि कृतप्रणामौ ॥ ३३ ॥
गिरौ निरोधादथ वागुरायाः संहृत्य बाणं धनुरुज्जिहानः ।
तयोः समालोकनजातभक्तिः पादौ नमामि स्म समं युवत्या ॥ ३४ ॥
ताभ्यां तपोभ्यामिव मूर्तिमद्भ्यामुद्दिष्टसाधुव्रततत्त्वमार्गः ।
विहाय पापर्धिरतिं तदाहं चरामि तस्मिन्फलक्लृप्तवृत्तिः ॥ ३५ ॥

---

१. मूलपुस्तकेऽधिकं पतितम्. २. एदित्वाद्वृद्धिर्न युक्ता. ३. मेकलकन्यका नर्मदा.

कदाचिदाहर्तुमहं फलानि वने·········प्रियया समेतः ।
श्र(स्र)स्तं शिरस्तः प्रविशद्विलान्तर्बिल्वं तरोः पक्कमपश्यमेकम् ॥ ३६ ॥
तस्मात्तदभ्युद्धरतः करेण दष्टस्य मे कालफणीश्वरेण ।
बभूव मृत्युः सहसैव साधुप्रदिष्टधर्मस्मरणस्थिरस्य ॥ ३७ ॥
ततो मम प्राणविनाशहेतुमन्वेषयन्ती रुदती प्रिया सा ।
ददर्श तस्मिन्भुजगं मुमूर्षुर्निक्षिप्तहस्ताथ मृता तथैव ॥ ३८ ॥
गुरुप्रसादादुपलब्धधर्मप्रभावतोऽहं वृषदत्तपत्न्याः[1] ।
पद्मश्रियः पद्मविलोचनाया जातस्तदा संततिरिभ्यकेतुः ॥ ३९ ॥
सरस्वती पुण्यतमा तदानीं स ब्रह्मचर्येव शिशुत्वमुग्धम् ।
लक्ष्मीश्च मां यौवनयोगरम्यमासेव्यत व्यञ्जितकामवृत्तिः ॥ ४० ॥
न केवलं सर्वकलागमेन समृद्धिभिः संततवृद्धिभिश्च ।
राजेव तस्यावसथे स तिष्ठे संपूर्णकान्तिः कृतलोकहर्षः ॥ ४१ ॥
विहाय सर्वानथ राजपुत्रान्स्वयंवरा मण्डपमञ्चभाजः ।
राज्ञः सुता श्रीजितशत्रुनाम्नः पद्मेव वव्रे कमलप्रभा माम् ॥ ४२ ॥
द्वेधा विरक्तो विषयोपभोगेष्वदृष्टपुत्राननचन्द्रबिम्बः ।
मय्येव राज्यस्य निवेश्य भारं योगेन तत्याज तनुं स धीमान् ॥ ४३ ॥
राज्यश्रिया तस्य तनूजयेव विभ्राजमानो हृतराजमानः ।
निर्जित्य सर्वाः ककुभो धरित्रीमेकातपत्रामचिरादकार्षम् ॥ ४४ ॥
निःशेषभूभृद्विभुसंभवायां गौर्यां महेशस्य यथा कुमारः ।
अकुण्ठशक्तिः कमलप्रभायां जातस्ततो मे तनयः सुकेतुः ॥ ४५ ॥
गृहानथ प्राक्तनपुण्ययोगाद्वरो मुनीनां स्थविरः समागात् ।
तस्योपदेशेन भवाद्विरक्तो धर्मः परं मे विषयीबभूव ॥ ४६ ॥
सूनावुरुस्कन्धविराजमाने भारं भुवोऽहं वृषभे निवेश्य ।
योगेन मृत्वामरतामगच्छं सौधर्मलक्ष्मीनिलये विमाने ॥ ४७ ॥
मनोरथानन्तरमेव पुण्यैः प्रादुर्भवत्सर्वसमीहितार्थे ।
स्त्रीणां यथावाञ्छितवर्तिनीनां न व्यज्यते यत्र मनोभिलाषः ॥ ४८ ॥

---

१. 'पश्यन्त्याः' इति तूपलभ्यते.

यस्मिन्नकस्मादभिलाषपूर्वमुद्भूतनष्टातपशीतवर्षे ।
निदाघहेमन्ततपात्ययानां व्यवस्थितः कोऽपि न हि प्रभावः ॥ ४९ ॥
क्रीडानिमित्तं स्मृतमेति यस्मिन्नुर्वीधरोद्यानसरोवरादि ।
किं न्वन्तरालाध्वविहारकेलिवाञ्छैव तत्संनिधियानहेतुः ॥ ५० ॥
तस्मिन्ननेकाद्भुतभोगभूमौ सहाप्सरोभिर्नवविभ्रमाभिः ।
यथाभिलाषं विषयानुभूत्या कालं नयामि स्म सुखी प्रभूतम् ॥ ५१
च्युत्वा ततः श्रीमति पुष्करार्ध(ह्व)द्वीपे महेन्द्राद्भुतविक्रमस्य ।
सूरप्रभस्याथ नरेश्वरस्य चिन्तागतिः सूनुरभूवमुर्व्याम् ॥ ५२ ॥
शस्त्रां च शस्त्रं च मया गृहीतं सम्यग्गुरुभ्यः शिशुनाभियोगात् ।
अतोऽर्थसिद्धिक्षमतां ममाप प्रज्ञापकर्षश्च पराक्रमश्च ॥ ५३ ॥
सुव्यक्तचित्रक्रमशोभमानपादैर्गरीयः कविकानुबन्धैः ।
कुर्वन्विनोदं दिवसान्कदाचिच्छ्लोकैर्नयामि स्म तुरंगमैर्वा ॥ ५४ ॥
स्वमर्थमादेश इवाथ शब्दः[1] स राज्यभारं मयि संनिवेश्य ।
जगाम सारङ्गकदम्बकान्तं तपोवनान्तं सहितो विरत्या ॥ ५५ ॥
पैत्रं मया विष्टरमास्थितेन युद्धे विजिग्ये रिपुराजचक्रम् ।
राज्यं क्रमेणाधिगतं हि राज्ञां पराक्रमेण स्थिरतामुपैति ॥ ५६ ॥
अथापरेद्युर्विदितप्रभावः सूरप्रभस्योपवने पुरस्य ।
समाययौ श्रीदमसुख्यनामा मुनिः स्वयं धर्म इवाकृतिस्थः ॥ ५७ ॥
तदागमे सत्यमृतव्यपेक्षं वृक्षेषु तत्र प्रसवाञ्चितेषु ।
त्रिकालसंविन्मधुपैरवापे यदुत्तमैः किं तदुदीरणेन ॥ ५८ ॥
ततोऽस्य पादाम्बुजवन्दनार्थमहं गतोऽहंकृतिवर्जितस्य ।
तत्त्वोपदेशात्प्रतिबुद्धचेताः सुताय साम्राज्यमदामदीनम् ॥ ५९ ॥
ततश्च योगेन वपुर्वियोगं विधाय साधूत्तमदर्शितेन ।
माहेन्द्रनाम्ना प्रथिते चतुर्थस्वर्गे महेन्द्रत्वमहं प्रपन्नः ॥ ६० ॥
उद्दामवैडूर्यविमानगर्भे स्फुरत्प्रभा यत्र चकोरनेत्राः ।
प्रावृट्पयोदान्तरलीनविद्युल्लताश्रियं संततमाश्रयन्ते ॥ ६१ ॥

---

१. शब्दः प्रत्ययादिः स्वकीयमर्थमादेश इव इत्यर्थः.

म्लायन्ति यस्मिन्सुरवृक्षपुष्पस्रजो न भास्वत्करसंगमेव ।
अम्लानदिव्यांशुकभूषितानां स्पर्शाच्च संभोगसुखं वधूनाम् ॥ ६२ ॥
मृत्युर्जरायाः परमस्ति यस्मिन्व्याधिर्जनो यत्र जनस्य नायम् ।
मुक्ताफलैर्यत्र विभूषणश्रीलीलावनाली न पुनः कदाचित् ॥ ६३ ॥
दिव्याङ्गनाविभ्रमभोगभाजस्तस्मिन्ममायुःपरमप्रकर्षम् ।
विभेद कालः क्रमशो गिरीन्द्रं नित्यप्रवाही सरितामिवौघः ॥ ६४ ॥
श्रीगन्धिलाख्ये विषयेऽथ जम्बूद्वीपान्तरे सिंहपुरे पुरे च ।
नृपस्य जातो जिनदासनाम्नः पुत्रोऽहमुर्व्यामपराजिताख्यः ॥ ६५ ॥
आकृष्य कामं करवालमाजौ लक्ष्मीर्मयागृह्यत वैरिवर्गात् ।
विरोधिना चेति रुषेव दत्तं विद्वत्कुलं स्थानमनिष्टमस्याः ॥ ६६ ॥
प्रभावमन्दीकृतसूरतेजा[1] वृद्धः पिता मेऽर्पयति स राज्यम् ।
विराजमानस्फुटपुण्डरीकं[2] वनं वसन्तस्य यथा तपस्यः ॥ ६७ ॥
असेवि शेषं निजपुण्यराशेस्तस्मिन्मया स्वःस्थितिनिष्ठितस्य ।
निदाघशुष्कस्य ह्रदावशिष्टं नीरं नदस्येव वनद्विपेन ॥ ६८ ॥
अथान्यदा दानविभोगभङ्ग्या राज्यश्रियं स्वार्पयतः सतो मे ।
चैत्येषु नन्दीश्वरपर्व कर्तुममेयतेजा मुनिराजगाम ॥ ६९ ॥
भक्त्योपपन्नस्य यतिर्ममाथ मिथ्यातमः सोऽत्र तथा ममाथ ।
दृग्गोचरः पापपथे यथाभूद्दुःखाम्बुपूरो नरकान्धकूपः ॥ ७० ॥
सोऽहं विमोहं परिहृत्य कृत्यं विज्ञाय पुत्रार्पितराज्यभारः ।
तदुक्तधर्माचरणादभूवं देवोऽच्युतेन्द्रो रुचिरे विमाने ॥ ७१ ॥
उच्चैः कुचद्वन्द्वफलानतानां पत्रावलीकान्तिभृतां ततोऽहम् ।
दिव्याङ्गनानां शुभवल्लरीणां शाखीव पात्रं परितोऽपि जातः ॥ ७२ ॥
आर्द्रप्रसूनाभरणानि देहे श्रीखण्डकर्पूरविलेपनं च ।
स्मराभितापप्रशमाय यूनां यत्र प्रकृत्या सुरभित्वभाजाम् ॥ ७३ ॥
तत्रानुभूयातिचिरं चकोरविलोचनाभिः सह भोगलीलाम् ।
च्युतोऽहमुर्व्यां यदि वा जनस्य कस्योन्नतिः स्त्रीमुखलालसस्य ॥ ७४ ॥

---

१. फाल्गुनमासोऽपि मन्दसूर्यतेजाः.  २. राज्येऽपि सितच्छत्रं स्फुटं भवति.

जातस्ततोऽहं कुरुजाङ्गलेषु श्रीचन्द्रनाम्नो नृपतेस्तनूजः ।
स्वर्गश्रियं बिभ्रति हस्तिनागपुराङ्के प्रतिष्ठावति सुप्रतिष्ठः ॥ ७५ ॥
कथंचिदारब्धपदक्रमेण मया ततः शैशवमास्थितेन ।
देव्या जनन्या इव शारदायाः सद्वाङ्मयं स्तन्यमिव न्यपायि ॥ ७६ ॥
विद्यासरित्संगमपावनस्य स यौवनं वीक्ष्य ममाथ तातः ।
विवाहदीक्षां विधिवद्व्यधासीद्दत्त्वा च राज्यं दिवमारुरोह ॥ ७७ ॥
असंस्कृतैः पादनखैर्वृहद्भिर्धर्मप्ररोहैरिव राजमानः ।
पुरे ममागादनगारवन्द्यः श्रीसुन्दरो नाम मुनिः कदाचित् ॥ ७८ ॥
ततश्च तद्धर्मकथामृतेन विभोगतृष्णापगमे समन्तात् ।
स्वापत्यदत्तक्षितिराज्यभारस्तपोऽग्रहीषं तत एव साधोः ॥ ७९ ॥
कर्मेन्धनप्लोषविवृद्धधाम्ना व्रतानलेन ज्वलतः शरीरात् ।
आत्मा यमुड्डीय ययावलक्ष्यः कान्ते विमाने रसवज्जयन्ते ॥ ८० ॥
अहीनभोगार्पितसर्वकायः स्थित्वा चिरं शौरिरिवाहमत्र ।
जातोऽस्मि संप्रत्यवशेषपुण्यैर्वंशे यदूनामिह माननीये ॥ ८१ ॥
जन्मान्तरेष्वित्थमवेक्ष्य काम्यं धर्मात्फलं साधुगुरूपदिष्टात् ।
नाम्युत्सहे कर्तुमधर्ममेनं को वा पथो यात्यपथे सचक्षुः ॥ ८२ ॥
श्रुत्वा ततस्तत्परमार्थनिष्ठं नेमेर्वचो बन्धुजनः समग्रः ।
युक्त्या प्रसह्य प्रतिबोधितोऽपि व्यक्ताश्रुरासीद्विरहार्तिभीरुः ॥ ८३ ॥

समापृच्छ्य श्रीमानथ स पितरौ साश्रुनयनौ
सुतादुःखोद्विग्नं श्वशुरमपि संबोध्य बहुशः ।
विवोढुं तां मुक्तिश्रियमुदयिनीमेकहृदयो
दयालुस्तत्कालं वनमभिययौ रैवतगिरेः ॥ ८४ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये पूर्वभववर्णनो नाम त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः ।

अथ तत्र निवर्त्य दिक्पतीन्स सुरेन्द्राननुयायिनः प्रभुः ।
पृथिवीभृति मुक्तिवर्ति(र्त)नीमणिसोपान इवारुरोह सः ॥ १ ॥

रमणीयतया न केवलं सुरलोकस्य जगाम सेव्यताम् ।
अथ नेमिपदैः पवित्रितः शिखरीतीर्थतयाप्यसौ मुहुः ॥ २ ॥
अनुकूलतया मरुत्क्षणं तमुदस्यन्निव शृङ्गगामिनम् ।
व्यचरत्पुरतः पथोधुतस्थलपद्मालिरुतैर्वदन्निव ॥ ३ ॥
मदवेक्षणमन्मथव्यथां विधुरा मा स्म भजन्पुराङ्गनाः ।
इति तेन गिरौ स्थितिर्मता न गृहद्वेषवनानुरागतः ॥ ४ ॥
जगृहे स्वयमेव संयमः शुचिना तेन ततो महात्मना ।
जगतोऽप्युपरि स्फुरद्धियां गुरुरात्मैव विवेकिनां मतः ॥ ५ ॥
स यथा पृथिवीभृतः पुरा बहुशाखाप्रसरं समुन्नतम् ।
श्रितमाश्रितसंयमोऽपि सन्परितो वंशमभूषयत्तथा ॥ ६ ॥
प[द]जानुलसद्भुजालतः क्षितिसंस्थापितपादनिश्चलः ।
स तमाल इवोत्थितो नवः शुशुभे भूधरकाननान्तरे ॥ ७ ॥
कुसुमैर्विकसद्भिराहृतैः सविधोर्वीरुहसंततेर्मुहुः ।
मरुतः[1] कतमे तमोपहं न तमानर्चुरुपागता दिशाम् ॥ ८ ॥
गिरिराजभुवं[2] समागतो वृषमेकं[3] धनमादधत्सदा ।
विरराज समाजिरध्वनै(?)रहिभिर्देहनिवासिभिर्विभीः ॥ ९ ॥
गलकन्दललम्बमानया तनुवास्तव्यभुजंगमुक्तया ।
शशिरश्मिरुचा त्वचा बभौ निबिडक्षान्तिवरस्रजेव सः ॥ १० ॥
न परं च समाधिभावनात्प्रभुरामीलितदीर्घलोचनः ।
चरणेऽस्य विषाणघर्षणात्क्षतकण्डूर्मृगसंचयोऽप्यभूत् ॥ ११ ॥
ववृधे तपसा समं क्रमात्परमं ज्योतिरमुष्य धीमतः ।
रिपवश्च मनोभवादयः सह कायेन कृशत्वमाययुः ॥ १२ ॥
कथमस्य कुतोऽप्युपद्रवः समवृत्तेर्नखरायुधादिजः ।
स हि भूभृति तत्प्रभावतो मृगवर्गेऽपि किल न्यवर्तत ॥ १३ ॥
न रवेः परितापमातपादमृतांशोर्न च निर्वृतिं ययौ ।
यदहर्निशमेष योगभृद्विनिवृत्तेन्द्रियवृत्तिरास्थितः ॥ १४ ॥

१. देवाः. २. पर्वतभूमिं, पार्वतीं वा. ३. धर्मं, बलीवर्दं वा.

नवनीलतृणाङ्कुराकृतिप्रसरज्योतिपि तस्य विग्रहे ।
प्रणयं हरिणीदृशो व्यधुर्विपिनेऽप्यस्य यथा पुरे पुरा ॥ १५ ॥
सविधे विदधेऽस्य मर्मरध्वनिरारण्यकमारुतोत्थितः ।
दृढसंयमयोगपीडितस्मरबाणासनभङ्गविभ्रमम् ॥ १६ ॥
इह रैवतके विवर्धते कुतपस्तेन वहन्नपि क्षमाम् ।
न बभूव समो मुनेरयं सुतपो वर्धयतः समन्ततः ॥ १७ ॥
सुमनोभिरुपासितः सदा सहमानस्तुहिनातपव्यथाम् ।
उपगूढवपुः स वल्लिभिस्तरुसौभाग्यमचूचुरन्मुनिः ॥ १८ ॥
अथ तीव्रतरप्रभाकरद्युतिसंतापमिव व्यपोहितुम् ।
नभसा(?) दिवि मेघडम्बरं नवमस्योपरि तत्क्षणं दधे ॥ १९ ॥
प्रथमाम्बुदवृन्दविन्दुभिः प्रथितो बाष्पसमुद्गमस्तनौ ।
विरराज तपोग्नितर्पणीकृतकर्माष्टकधूमवन्मुनेः ॥ २० ॥
धनचन्द्रकचारुचक्षुषः परिलुप्ताहिकुलोत्सवश्रियः ।
तदुपान्तिकबद्धताण्डवाः शिखिनः शक्रविडम्बनां व्यधुः ॥ २१ ॥
अवधीरितविग्रहं तपस्तदवेक्ष्य व्रतिचक्रवर्तिनः ।
विबभुः कुसुमैः कदम्बकाः स्फुटरोमाञ्चचयाञ्चिता इव ॥ २२ ॥
मुनयो गिरिकन्दरागृहा मुनिरोषापि(?) विवर्जिताश्रयः ।
इति लोकमतं प्रतिस्मितं कुटजैः पुष्पपदेन निर्ममे ॥ २३ ॥
करिकेसरिकासराकुले विपिने त्रातुमिवोद्यतो यतिम् ।
मरुतां पतिरादधे धनुर्निजमम्भोदनिनादसुन्दरम् ॥ २४ ॥
मरुतामनुगामिनां सतां सुरभित्वं वितरद्भिरुज्ज्वलैः ।
चरितान्यनुचक्रिरे मुनेर्विकसत्केतकपुष्पकेसरैः ॥ २५ ॥
नववारिदवृन्दवृष्टिभिः परिखेदं मुनिरेष मा स्म गात् ।
अभितः समभूदितीव भूर्विततच्छत्रकसर्गतत्परा ॥ २६ ॥
अरुचिस्तपसि प्रभाकरः कृतदोपः स्फुटमिन्दुरित्युभौ ।
तमवेक्ष्य स तीव्रसंयमं सगुणं चाग्रगतौ स्थितौ ह्रिया ॥ २७ ॥

कनकद्युतिविद्युदङ्किताः प्रथमे दिक्षु चलाः पयोभृतः ।
सितरत्नमयं सदीपकं भ्रमदारार्तिकमन्वयुर्मुनेः ॥ २८ ॥

नवनिर्मलमालतीलता कुसुमैः पूजयतेव पूजनम् ।
ऋषिरेष उपस्थितः स्फुटं घनशब्दस्तुतिना घनर्तुना ॥ २९ ॥

इदमेकमभून्महाद्भुतं यदहोरात्रभवासु वृष्टिषु ।
शुचिमानसभूषणो मुनेर्न स हंसः क्षुभितो मनागपि ॥ ३० ॥

पयसा नभसः प्रपेतुषा प्रचुरेणोद्धतमीनवाहनाः ।
सरितः परितोऽपि जज्ञिरे कलुषास्तस्य न तु व्रतोर्मयः ॥ ३१ ॥

क्षपितं कृतवृष्टिना रजः प्रथितं भूरि तमो घनर्तुना ।
अमुना मुनिना पुनः क्रमान्निहतं तद्द्वयमद्वयाभिधा(?) ॥ ३२ ॥

उपगम्य विनश्वरीं श्रियं विदधे गर्जितमम्बुदो जडः ।
स तु तामपहाय वाग्यमं प्रतिपेदे सकलार्थसाधनम् ॥ ३३ ॥

जलदैः कलशैरिवायतैर्निपतद्वारि विसारिशब्दितैः ।
तरुणस्य शिशोरिव व्यधादभिषेकं मघवा महामुनेः ॥ ३४ ॥

व्रतिनः कृतमभ्रसंभृतैर्बहिरस्यामलमङ्गमम्बुभिः ।
अभवद्विमलस्तथा तथा यमितान्तःकरणस्य संयमः ॥ ३५ ॥

सविधेऽस्य शिलीन्ध्रपादपाः कुसुमैः काञ्चनभङ्गपिङ्गलैः ।
अभवन्निशि किंकरा इव प्रतिपन्नोच्छ्रिखहस्तदीपिकाः ॥ ३६ ॥

स निशाकरभास्करं मुहुर्भ्रमदामेखलमुन्नते गिरौ ।
रुरुचेऽस्य मुनेः प्रदक्षिणक्रमणव्यग्रमिवोडुमण्डलम् ॥ ३७ ॥

सुभगेन्द्रधनुर्भ्रु भासुरं मुकुलेन्दुद्युतिमालिलोचनम् ।
मुखमारचयंस्तपात्ययः सह योगं मुनिना व्यधादिव ॥ ३८ ॥

सहसैव विधाय पुष्पितं फलितं पल्लवितं च काननम् ।
स्वकृतक्षयशङ्किना ध्रुवं वनवह्निः शमित(तोऽ)स्य तेजसा ॥ ३९ ॥

अनयत्प्रशमं दवानलं पुरतः संनिधिरेव सन्मुनेः ।
जलदैस्तु वृथैव गर्जितं जलमुत्सृज्य दिवि भ्रमं गतैः ॥ ४० ॥

अथ तीव्रतरव्रतस्थितेर्विमलध्याननिवेशितात्मनः ।
उप(द)पद्यत केवलं मुनेः परमं ज्योतिरनाश्रितेन्द्रियम् ॥ ४१ ।
विततार्णवराजिमीलितं परितो विस्तृतसिन्धुरेखितम् ।
गिरिकाननलीलभक्तिमद्वलयं स्वस्तिकसंनिभं भुवः ॥ ४२ ॥
फणिलोकफणामणिप्रभापटलैर्भिन्नतमिस्रदिङ्मुखम् ।
अरुणांशुचयारुणीकृतं खमिव प्रातरहीन्द्रविष्टपम् ॥ ४३ ॥
विविधद्युतिरत्नरोचिभिः प्रचलैर्व्योम्नि विमानमण्डलैः ।
निजमानसयन्त्रिकैः सुराञ्विहितस्वैरविहारविभ्रमान् ॥ ४४ ॥
स ददर्श जगत्त्रयं ततो विलसत्केवलबोधसंपदा ।
अवलुप्ततमप्रदीपकप्रभया नक्तमिवात्ममन्दिरम् ॥ ४५ ॥
सुकृतानवलोक्य सुस्थितान्नरकस्थांश्च विरुद्धकर्मणः ।
मुदमुद्वहति स न क्षणं करुणार्द्रो भवति स केवली ॥ ४६ ॥

अन्तर्विशुद्धतरबोधमहर्द्धिभाजो
विभ्राजमानविततद्युतिमण्डलस्य ।
तस्योपमानमभवद्विनिगूढरत्नो
रत्नाकरः सलिलमालितदिग्निवेशः ॥ ४७ ॥

अथापगतमानवप्रकृतिरुत्तरैर्दैवतै-
रयुज्यत सचेष्टितैर्दलितकर्ममर्मा जिनः ।
महीरुह इवाखिलच्युतपुराणपत्रावलि-
र्नवैः किशलयोत्करैः कलितचैत्रकालागमः ॥ ४८ ॥

इति श्रीनेमिनिर्वाणे वाग्भटविरचिते महाकाव्ये उत्पन्नकेवलयानो नाम चतुर्दशः सर्गः ।

---

## पञ्चदशः सर्गः ।

पुष्पवृष्टिर्बभूवाथ तं प्रति प्राप्तषट्पदा ।
रक्तमुक्तिवधूमुक्तकटाक्षानुकृतिक्षमा ॥ १ ॥
आयोजनशतद्वन्द्वमद्भुतात्तत्प्रभावतः ।
दुर्भिक्षस्येव संजज्ञे बाधा न प्राणिनां क्वचित् ॥ २ ॥

आरूढ इव रागेण विभोश्चित्तवहिर्भुवा ।
अशोकतरुरासत्तिं तस्य भेजे सुपल्लवः॥ ३ ॥
प्रभापरिभ्रमाकारं ज्ञानश्रीरत्नदर्पणम् ।
मुखपद्मप्रतिच्छन्दं सेवायातार्कभासुरम् ॥ ४ ॥
तस्यान्तरादिदैत्येन्द्रद्रोहिचक्रायुधोपमम् ।
कामेषुरोधिफलकं ददृशे दीप्तिमण्डलम् ॥ ५ ॥
(युग्मम्)
ज्ञानदर्शनचारित्राण्यासाद्येवास्य मूर्तताम् ।
अन्यानि त्रीणि वक्त्राणि प्रादुरासन्न मायिनः ॥ ६ ॥
सर्वविद्याधिनाथत्वमियताप्यस्य लक्षितम् ।
उपसर्गाभिसंवन्धस्तेन नाम्ना न्यषेधि यत् ॥ ७ ॥
भामण्डलभयान्मन्ये छाया तस्यान्तराविशत् ।
यत्प्रशान्तिं गताः सर्वाश्चेतःसंतापसंपदः ॥ ८ ॥
दिक्षु सर्वासु चक्षूंषि निमेषं तस्य न व्यधुः ।
नमद्भव्यजनालोकव्याकुलानीव संततम् ॥ ९ ॥
नावर्धन्त नखास्तस्य केशाश्चेति लसद्गुणः ।
श्रुतं गृहीतं तैर्मन्ये यद्वृद्धिर्गुणवाधिका ॥ १० ॥
स्वल्पस्वल्पतमप्राणिप्राणव्ययभयादिव ।
विहाय स महीपृष्ठे संचारमचरद्दिवि ॥ ११ ॥
भूतभावि भवद्वस्तु ज्ञानसंकाशमुल्लसत् ।
आतपत्रत्रयं शुभ्रं बभासे तस्य संनिधौ ॥ १२ ॥
दिवि दुन्दुभिनादोऽभूत्तत्प्रभावमृगप्रभोः ।
दुर्निमित्तभयूथेभ्यो हुंकार इव कुप्यतः ॥ १३ ॥
स्वकालमन्तरेणापि तरूनास्कन्धपुष्पितान् ।
ससंभ्रमदृशो दूरं ददृशुर्वनदेवताः ॥ १४ ॥
अथादेशं सुरेशस्य प्राप्य पुण्यजनेश्वरः ।
किल निर्वर्तयामास तस्मै रत्नमयीं सभाम् ॥ १५ ॥

उपर्युपरिगतैर्नव्यैः क्षणं जलदमण्डलैः।
यत्र मारकती चक्रे स्फुटं स्फटिकमेदिनी॥ १६॥
नानारत्नमयस्तम्भप्रभाच्छुरितविग्रहाः।
मयूरा इव यद्भित्तिचित्रहंसाश्चकासिरे॥ १७॥
यत्र स्फटिकसोपानबिम्बिताः केतवश्चलाः।
व्योमगङ्गातरङ्गान्तर्लोलमीनतुलां दधुः॥ १८॥
दिव्यपुष्पोपहाराय पतन्ती षट्पदावलिः।
नीलरत्नमयी वृष्टिरिव यत्र व्यराजत॥ १९॥
कर्पूरागुरुसंभूता धूपा जालोद्गता बभौ।
यत्रागतानां जीवानां निर्यान्तीव तमस्ततिः॥ २०॥
नक्षत्ररत्नखचिता चन्द्रकुम्भप्रभासिनी।
जगन्मयीव या रेजे व्योमगङ्गापताकया॥ २१॥
उच्चैः केतुकरप्रान्तस्फारिताभ्रसरिज्जलात्।
उत्थिता इव भान्ति स्म पृषता यत्र तारकाः॥ २२॥
तस्यां निवेशितं दिव्यं रत्नसिंहासनत्रयम्।
त्रैलोक्यमिव सद्बोध आरुरोह स मोहभित्॥ २३॥
स्थगयद्भिस्तनुव्यक्तिं व्यञ्जयद्भिर्दिशो दश।
तमाजग्मुस्तदासीनं तेजोभिर्भासुरं सुराः॥ २४॥
ग्रहैर्भिन्नप्रभावर्णैरिन्द्रदक्षिणदोर्भुवि।
अङ्गदस्येव मणिभिश्चकासेऽनुक्रमास्थितैः॥ २५॥
तमाल इव वृक्षेषु पाण्डवेष्विव मारुतिः।
ग्रहेष्विव स्थितो राहुर्यमो देवेष्वभासत॥ २६॥
यथा दानादयः साम्ना धर्मेणार्थादयो यथा।
पुरःसरेण शक्रेण रेजुर्दिक्पतयस्तथा॥ २७॥
दूरमुत्क्रमरुद्धैरैर्दानवैः सौम्यमूर्तिभिः।
उपतस्थे स रक्षोभिरक्षोभितसुराङ्गनैः॥ २८॥

तालवंशार्पितश्रीकैर्गन्धर्वैः पर्वतैरिव ।
यक्षैर्भूषणसंभारशोभा बद्धसुरेक्षणैः ॥ २९ ॥
सप्तार्णवान्तविख्याताः सप्तलोकाभिवन्दिताः ।
सप्ततत्त्वोपमाः प्रापुर्जिनं सप्त महर्षयः ॥ ३० ॥
सहस्रफणसंरूढरत्नदीपकभासुरः ।
उपतस्थेऽथ नागेन्द्रो जिनं नीराजयन्निव ॥ ३१ ॥
देवदानवगन्धर्वयक्षरक्षोमहोरगाः ।
तं निपत्य समं हर्षात्तुष्टुवुः समहर्षयः ॥ ३२ ॥
नमो मीनध्वजाम्भोधिसैकताय यतात्मने ।
तुभ्यमभ्युदयप्राप्तिकल्पवृक्षाय योगिनाम् ॥ ३३ ॥
कल्याणकारिणे तुभ्यं शिवाय भगवन्नमः ।
सनातनाय गीर्वाणज्येष्ठभूताय तेजसा ॥ ३४ ॥
अभग्नकाष्ठमुत्तुङ्गभोगतृष्णामहोर्मिभिः ।
तपः पात्रं त्वयास्थाय समुत्तीर्णो भवार्णवः ॥ ३५ ॥
तपोहुताशनक्षिप्तादात्मनः काञ्चनादिव ।
रागादिश्यामिकादोषं बहिः कर्तुं त्वमीश्वरः ॥ ३६ ॥
भामण्डलार्कसांनिध्यतप्ताः कामादयो ध्रुवम् ।
छायाछेदे परित्यज्य भवन्तं निर्ययुः क्वचित् ॥ ३७ ॥
अनादिनिधनस्यास्य कालस्येवात्मनस्त्वया ।
निन्ये व्याप्य दशामेतदमेयं भुवनत्रयम् ॥ ३८ ॥
नक्तमिन्दोर्दिवा भानोस्तेजः स्फुरति सर्वतः ।
तवाप्रतिहतं तद्धि देव नक्तं दिवापि च ॥ ३९ ॥
ज्योतिर्व्यन्तरकल्पस्थान्देवान्भुवनवासिनः ।
समं बोधयितुं वाग्भिश्चतुर्वक्त्रोऽसि निश्चितम् ॥ ४० ॥
सुगतिश्लाघ्ययौष्माकवृषस्कन्धनिवेशितम् ।
ये मनोरथमारूढास्तेषां न द्यौर्दवीयसी ॥ ४१ ॥

त्वं पितासि हितैषित्वात्त्वं गुरुर्धर्मदेशनात् ।
त्वं निधिर्दौस्थ्यविच्छेदात्सतामेकस्त्वमाश्रयः ॥ ४२ ॥
सर्ववेदिन्भवत्पादपद्मलीनानि योगिनाम् ।
अपरागाणि जायन्ते यन्मनांसि तदद्भुतम् ॥ ४३ ॥
योषिन्मुखतुषारांशुदर्शनेऽपि स्मरोर्णवः ।
मनः कूलमिवोत्तुङ्गं तव नालङ्घयत्क्वचित् ॥ ४४ ॥
नहि प्रसवसंपत्तिः कायच्छायापि नास्ति ते ।
वाञ्छितार्थप्रदश्चासि त्वमन्यः कल्पपादपः ॥ ४५ ॥
ज्ञानदर्शनचारित्ररत्नत्रितयशालिनः ।
भूषणैस्तव पर्याप्तं भारैकफलदायिभिः ॥ ४६ ॥
इति स्तुत्यान्तरीं भक्तिं व्यञ्जयन्तो यथाक्रमम् ।
परितो विश्वनाथस्य तस्योपविविशुश्च ते ॥ ४७ ॥
सभायामागतस्तस्यां वियतीव नवाम्बुदः ।
तत्त्वजिज्ञासया प्रश्नं गणी गर्जिमिवाकरोत् ॥ ४८ ॥
अथ प्रश्नं तमाकर्ण्य कर्णयोरमृतोद्गिरा ।
गिरा जगाद सिद्धार्थः प्रसिद्धार्थं मनोज्ञया ॥ ४९ ॥
तस्य वक्त्रेषु वाग्देवीश्चतुष्कं प्रतिपेदुषी ।
वृक्षयष्टिरिव स्कन्धनद्धशाखा रराज सा ॥ ५० ॥
जीवा[१] जीवा[२]श्रवौ[३] बन्[४]धसंवरौ[५] निर्जरा[६]न्वितौ ।
मोक्ष[७]श्च तानि तत्त्वानि व्याप्नुवन्ति जगत्त्रयम् ॥ ५१ ॥
चेतनालक्षणो जीवः शरीरपरिमाणभाक् ।
एकेन्द्रियादिभेदेन पञ्च यावत्स जायते ॥ ५२ ॥
पृथ्वी कायादयो ज्ञेया एकेन्द्रियसमन्विताः ।
शङ्खादयस्त्वसंख्याताः प्रासद्वीन्द्रियविग्रहाः ॥ ५३ ॥

---

१. जीवो द्वापञ्चाशत्तमश्लोके व्याख्यातलक्षणः. २. अजीवः सप्ततितम ३. आश्रवः पञ्चसप्ततितमश्लोके. ४. बन्ध त्रिसप्ततितमश्लोके. ५. संवरो द्वि तमश्लोके. ६. निर्जरा चतुःसप्ततितमश्लोके. ७. मोक्षः षट्सप्ततितमश्लोके.

पिपीलिकादयस्त्वेते संयुतास्त्रिभिरिन्द्रियैः ।
चतुर्भिश्चञ्चरीकाद्याः पञ्चभिर्मानवादयः ॥ ५४ ॥

नारकास्तेऽथ तिर्यञ्चो मनुष्या देवता इति ।
चतुर्विधाः प्रजायन्ते चेतसः परिणामतः ॥ ५५ ॥

बह्वारम्भपरा हिंस्राः सदा रौद्रात्मवृत्तयः ।
नरकेषूपजायन्ते नराः सप्तसु ते ध्रुवम् ॥ ५६ ॥

बध्यन्ते तत्र भिद्यन्ते छेदं भेदं सहन्ति च ।
उत्कृत्यन्तेऽथ ताड्यन्ते मोट्यते निर्दयं मुहुः ॥ ५७ ॥

तप्तायसशिलासीना लोहकण्टकशायिनः ।
सिक्तास्तप्तेन तैलेन स्वकर्माण्युपभुञ्जते ॥ ५८ ॥

ताडितानां प्रहारेण मुखात्तेषामसृक्छटाः ।
निर्यान्त्यन्तर्ज्वलद्दुःखवह्निज्वाला इवोज्वलाः ॥ ५९ ॥

कण्टकाग्रनखैर्भिन्ना विह्वलाः शोणलोचनाः ।
समं पीडाङ्गनाभिस्ते नरकेऽथासते चिरम् ॥ ६० ॥

इदं भवतु मे माभूदिदमित्यात्तवृत्तयः ।
उत्पद्यन्ते मृता जीवास्तिर्यग्योनिषु भूरिषु ॥ ६१ ॥

रज्जुभिः संयतास्ते च कर्मबन्धैर्निजैरिव ।
आरुह्य ते परैः किंच ताड्यन्ते यष्टिभिर्भृशम् ॥ ६२ ॥

काननेषु तृणाहाराः शीतवर्षातपार्दिताः ।
न सुखं शेरते नित्यं व्याधव्यधभयातुराः ॥ ६३ ॥

अशुच्याहारिणः केचित्स्पर्शानर्हाश्च केचन ।
केचिद्विषमुखाः केचिद्व्रणेषु कृमयो मुहुः ॥ ६४ ॥

आर्तरौद्रानुविद्धेन धर्मध्यानेन भाविताः ।
भवन्ति भविनो मृत्वा मानवाः कर्मभूमिषु ॥ ६५ ॥

उत्तमेषु कुलेष्वेके सुक्षेत्रेष्विव शालयः ।
उत्पद्यन्ते फलप्राप्तौ गलाः प्रत्युत संततिम् ॥ ६६ ॥

अभव्याश्च भवन्त्यन्ये दुःकर्मोर्मिविनिर्मिताः ।
म्लेच्छादीनामनार्याणां दुर्वंशेषु घुणा इव ॥ ६७ ॥
कर्मणा मनसा वाचा परपीडामनिच्छवः ।
तपोदानानुबन्धेन बध्नन्त्यायुः सुरालये ॥ ६८ ॥
अनुभूतफलास्तस्मिन्नास्थ किं कथ्यते हि वः ।
दिव्याङ्गनोपभोगादिसुखं स्वर्गेऽभिगामिनाम् ॥ ६९ ॥
धर्माधर्माणवः कालाकाशौ **चाजीव**संक्षिताः ।
**धर्मो** गतिनिमित्तं स्या**दधर्मः** स्थितिकारणम् ॥ ७० ॥
जगतो व्यापकावेतौ **कालाकाशा**वनस्वरौ ।
समग्रविग्रहारम्भहेतवः परमाणवः ॥ ७१ ॥
उत्पन्नानामनाबद्धकर्मणामेव संवृतिः ।
क्रियते या सरादीनां **संवरः** स उदाहृतः ॥ ७२ ॥
दृढं परिचयस्थैर्यं कर्मणामात्मनश्च यत् ।
शुभानामशुभानां वा **बन्धः** स इह बुध्यताम् ॥ ७३ ॥
कर्मणां फलभोगेन संक्षयो **निर्जरा** मता ।
भूत्यादर्श इवात्मायं तया स्वच्छत्वमृच्छति ॥ ७४ ॥
कायवाङ्मनसं योगः **कर्मणाश्रव**संज्ञितः ।
स हि निः...संसारनाटकारम्भसूत्रभृत् ॥ ७५ ॥
अनेकजन्मबद्धानां सर्वेषामपि कर्मणाम् ।
विप्रमोक्षः स्मृतो **मोक्ष** आत्मनः केवलस्थितेः ॥ ७६ ॥
इति तत्वोपदेशेन प्रकाशेनेव नाकिनः ।
चकार केवली हृष्टान्सूर्यः पद्माकरानिव ॥ ७७ ॥
अकरोत्स प्रभावेन तां सभां विमलाशयाम् ।
प्रसन्नसलिलां सद्यः शरत्काल इवापगाम् ॥ ७८ ॥
देशान्तरेष्वथान्येषु विजहार जिनेश्वरः ।
दिनेश्वर इव च्छेत्तुं तमो विश्वस्य विस्फुरन् ॥ ७९ ॥

